मिथिलाविद्यापीठग्रन्थमाला

महामहोपाध्यायतर्कवागीशहरिरामकृतः

# रत्नकोषमतवादार्थः

मिथिलासंस्कृतविद्यापीठप्राध्यापकेन
श्रीशोभाकान्तजयदेवझाशर्म्मणा
सम्पादितः

मिथिलासंस्कृतविद्यापीठनिदेशकेन
प्रकाशितः

मिथिलाविद्यापीठग्रन्थमाला

महामहोपाध्यायतर्कवागीशहरिरामकृतः

# रत्नकोषमतवादार्थः

मिथिलासंस्कृतविद्यापीठप्राध्यापकेन
श्रीशोभाकान्तजयदेवझाशर्म्मणा
सम्पादितः

मिथिलासंस्कृतविद्यापीठनिदेशकेन
प्रकाशितः

मूल्यम् २ रु० २५ पै०



The GOVERNMENT OF BIHAR established the Mithila Institute of Post-Graduate Studies & Research in Sanskrit Learning at Darbhanga in 1951 with the object, *inter-alia,* to promote advanced studies and research in Sanskrit learning to bring together the traditional Pandit with their profound learning and modern scholars with their technique of Research and Investigations, to publish works of permanent value to scholars. This Institute is one of the six others started by this Government as a token of their homage to the tradition of learning and scholarship for which ancient Bihar was noted. Apart from the Mithila Institute, five others have been established and have been doing useful work for the last few years—the Nalanda Institute of Research and Post-Graduate studies in Budhist Learning and Pali at Nalanda, the K. P. Jayaswal Research Institute at Patna, the Bihar Rashtra Bhasa Parishad for Research and Advanced Studies in Hindi at Patna, the Institute of Post-Graduate Studies and Research in Jaina and Prakrit Learning at Vaishali and the Institute of Post-Graduate Studies and Research in Arabic and Persian Learning at Patna. In the establishment of the Mithila Institute the State Government received a generous donation from the Maharajadhiraja of Darbhanga for construction of the building on a plot of land also donated by him.

As part of this programme of rehabilitating and re-orientation of ancient learning and scholarship, the editing and publication of this volume has been undertaken with co-operation of Scholars in Bihar and outside. The Government of Bihar hope to continue to sponsor such projects and trust that this humble service to the world of scholarship and learning would bear fruit in the fulness of time.

# RATNAKOSAMATAVADARTHA

OF

## Mm. TARKABAGISH HARI RAM

*EDITED BY*

**Prof. SHOBHAKANT JAYADEVA JHA**

*PUBLISHED BY*

**Dr. S. BAGCHI**

*Director, Mithila Institute of Post Graduate Studies and Research in Sanskrit Learning, Darbhanga.*

1966

मिथिलाविद्यापीठग्रन्थमाला

महामहोपाध्यायजगद्गुरुतर्कवागीशो
हरिरामविरचितः

# रत्नकोषमतवादार्थः

मिथिलासंस्कृतविद्यापीठप्राध्यापकेन
व्याकरण-न्याय-वेदान्ताचार्य्य-तर्क-वेदान्ततीर्थेन
श्रीशोभाकान्तजयदेवझाशर्म्मणा
सम्पादितः

डा० श्रीशीतांशुशेखरवागची
एम्. ए., एल. एल. बी., डी. लिट् महाशयेन
मिथिलासंस्कृतविद्यापीठनिदेशकेन
प्रकाशितः

शकाब्दाः १८८८ विक्रमाब्दाः २०२२ खृष्टाब्दाः १९६६

# ॥ प्राक्कथनम् ॥

नाविदितमस्ति विदुषां परमकारुणिकेन मुनिना गोतमेन जगदेव दुःखपङ्कनिमग्नमुद्दिधीर्षुणाऽष्टादशविद्यास्थानेष्वभ्यर्हितान्वीक्षिकी प्रणीतेति ।

तस्याश्च परमपुरुषार्थप्रसाधकत्वं तेनैव मुनिना गोतमेन "प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः" इति प्रथमसूत्रेण प्रादर्शि ।

वत्सकुलविभूषणेन भाष्यकृता मुनिना पक्षिलस्वामिना—

प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम् ।
आश्रयः सर्वधर्म्माणां विद्योद्देशे प्रकीर्त्तिता ॥

(न्याय भाष्यम्)

इत्यनेन सकलविद्याप्रकाशकत्वमथ च सर्वव्यवहारोपयोगित्वं निरदेशि ।

किम्बहुना एतच्छास्त्रप्रतिपादितशैलीमनुसृत्यैव सर्वैरपिविद्वद्भिः स्वशास्त्रीयविषयजातचिन्तनं व्यधायि ।

मानाधीनामेयसिद्धिरितिचिरन्तनोक्तिमनुसन्दधानैः धीधनैः प्राधान्येन प्रामाणतत्त्वमेव प्रथमं विविच्यते ।

तत्रापि स्वविनिश्चितार्थप्रतिपादकवाक्यसमूहरूपग्रन्थस्य परार्थानुमानतयाऽनुमानप्रमाणस्यैवाभ्यर्हितत्वं निर्णयद्भिरनुमानप्रमाणमेव सर्वतोऽधिकं परामृश्यते ।

न्यायशास्त्रसम्मतेषु चतुर्विधप्रमाणेषु प्रत्यक्षानुमानोपमानशब्देष्वनुमानप्रमाणस्यैव स्वतः प्रामाण्यं निरणायि नैयायिकशिरोमणिमैथिलप्रवरवाचस्पत्युदयनवर्द्धमानादिभिः ।

अनुमाने च हेतौ सद्धेतुत्वज्ञानमिव हेत्वाभासत्वज्ञानमपि तत्त्वनिर्णयविजयप्रयोजकतया परमावश्यकं मन्यमानैः नव्यनैयायिकैः हेत्वाभासजातं महताप्रयत्नेन स्वस्वग्रन्थे परिष्कृतेन पथा प्राकाशि ।

तत्र प्रत्यक्षपरोक्षभेदनज्ञानद्वैविध्यंनिरूप्य परोक्षज्ञानस्य निश्चयात्मकत्वं प्रसाध्यते तार्किकैः । किन्तु नैयायिकप्रवरैः रत्नकोषकृद्भिस्तरणिमिश्रैः विरोधिपरामर्शस्थलेऽनुमितेः परोक्षज्ञानस्य संशयात्मकत्वं स्वीक्रियते । तथाहि-यथा सत्यपि घटाभावव्याप्यनिर्णये लौकिकसन्निकर्षप्रयुक्तं जायते घटप्रकारकम्प्रत्यक्षम्, तथैव सति कोटिद्वयव्याप्यनिर्णये जायते कोटिद्वयविषयकः संशयः ।

---

१—अङ्गानिवेदाश्चत्वारो मीमांसान्यायविस्तरः ।
धर्मशास्त्रं पुराणं च विद्या ह्येताश्चतुर्दश ॥१॥
आयुर्वेदो धनुर्वेदोगान्धर्वश्चेतिते त्रयः ।
अर्थशास्त्रं चतुर्थं तु विद्या ह्यष्टादशैवश्च ताः ॥२॥

(विष्णुपुराणम्)

एवमेव पीतत्वाभावव्याप्यशङ्खत्वप्रकारकनिश्चये दोषविशेषप्रयुक्तो भवति पीतः शङ्ख इतिभ्रमः। अतोविज्ञायते तत्प्रकारकज्ञानसामान्ये तदभाव-प्रकारकनिश्चयत्तदभावव्याप्य-प्रकारकनिश्चययोश्च न प्रतिबन्धकत्वमपितु विशिष्य तत्प्रकारकज्ञानं प्रति तदभावप्रकारक-तदभावव्याप्यप्रकारकनिश्चययोश्च प्रतिबन्धकत्वम्। अतो विरोधिपरामर्शद्वयकाले एकत्र धर्मिणि तत्तदभावयोः भानोत्पादकसामग्रीबलेन तत्तदभावद्वयविषयकानुमितिः स्यादेव-संशयरूपा। यद्यपिसंशयरूपानुमितित्वं न कस्यापि परामर्शस्य जन्यतावच्छेदकम्, तथाप्येकत्र धर्मिणि विरुद्धकोटिद्वयज्ञानंनिर्णयात्मकं न संभवत्यतोऽनुमितौप्रतिफलत्यर्थात्संशयत्वम्। यत्रचैककोटिव्याप्यप्रकारकनिर्णयमात्रं तत्र द्वितीयकोटिभानसामग्र्यभावादेवैककोटिकानुमितौ जायते निर्णयरूपत्वम्, यतो निर्णयत्वं न निवेश्यते परामर्शजन्यतावच्छेदककुक्षौ। अतोनिर्णीयते तद्व्याप्यवत्ताज्ञानाभावविशिष्टस्यैव तदभावव्याप्यवत्ताज्ञानस्य तद्वत्ताज्ञानं प्रति प्रतिबन्धकत्वम्। तदभावप्याप्यवत्ताज्ञानाभावविशिष्टस्य तद्व्याप्यवत्ताज्ञानस्य च तदभाववत्ताज्ञानं प्रति प्रतिबन्धकत्वमिति विशिष्यैव स्वीकरणीयः प्रतिबध्यप्रतिबन्धकभावः। इत्थंचैकैककोटिपरामर्शसत्त्वे द्वितीयकोटिभानप्रतिबन्धादेव द्वितीयकोटिभानासम्भवादेकको-टिकानुमितौ न भवतिसंशयत्वम्। अतोरत्नकोशकृत्तरणिमिश्रमते सत्प्रतिपक्षस्य दूषकताबीजं संशयरूपानुमितिजनकत्वमेव प्रतिफलति।

नव्यनैयायिका गङ्गेशोपाध्यायप्रभृतयस्तु साध्याभावव्याप्यवत्पक्षरूपस्य सत्प्रतिपक्षस्य नित्यदोषतया तस्यानुमितिप्रनिबन्ध एव फलमित्यङ्गीचक्रुः। ह्रदो वह्निमानित्यादिस्थले वह्न्यभावव्याप्यजलवद्ध्रदस्य सत्प्रतिपक्षत्वं, तन्निर्णयस्य च बाधनिर्णयस्येव लौकिकसंनिकर्षा-जन्यदोषविशेषाजन्यतद्धर्मिकतत्प्रकारकबुद्धिं प्रति अनाहार्याप्रामाण्यज्ञानानास्कन्दिताव्याप्यवृ-त्तित्वभ्रमानास्कन्दिततदभावव्याप्यप्रकारकनिश्चयत्वेन प्रतिबन्धकत्वम्। एवंच विरोधिपरा-मर्शद्वयस्थले परस्परप्रतिबन्धादेव न स्यात्कथमपि संशयरूपाऽनुमितिः। यद्यपि येषांदोषत्वं तद्व्याप्यानामपि तत्रैवान्तर्भाव इतिबाधव्याप्यसतप्रतिपक्षस्य बाधएवान्तर्भावो युज्यतेऽन्यथा व्यभिचारव्याप्यादीनां व्यभिचारदोषानन्तर्भावे हेत्वाभासाधिक्यं स्यात्, तथाप्यक्षपादमुनेः पर्यनुयोगानर्हतया तेन सत्प्रतिपक्षस्य हेत्वाभासमध्ये स्वातन्त्र्येण परिगणिततया बाधव्याप्य-त्प्रतिपक्षस्य नैव युज्यते बाधेऽन्तर्भावइति विभावनीयम्।

यद्यपि गङ्गेशोपाध्यायै रत्नकोषकृतां मतमुपन्यस्यद्भिस्तत्कर्तृत्वेन तरणिमिश्रा नोक्ताः। तथापि महामहोपाध्यायै रुचिदत्तोपाध्यायैरीश्वरानुमाने "तथा रत्नकोषे तरणिमिश्रैरुक्तम्" इति समुदीरितं, तेन प्रतीयते वस्तुतस्तरणिमिश्र एव रत्नकोषकारः, एतस्य समयः खृष्ट-चतुर्दशशताब्दीमध्यविराजमानतत्त्वचिन्तामणिकारगङ्गेशोपाध्यायात्प्राक् विद्वद्भिर्निर्धार्यते।

रत्नकोषमतवादार्थप्रणेता महामहोपाध्यायजगद्गुरुतर्कवागीशमहाशयो नव्यन्यायप्रथित-यशसो नवद्वीपनिवासिनोऽपरगदाधरस्य गदाधरभट्टाचार्य्यस्य वाराणस्यां न्यायाध्यापकपद-मुपेयुषो न्यायालङ्कारस्य रघुदेवस्य चासीद्गुरुः। श्रूयते तर्कवागीशहरिरामःस्वसमये नव्यनैया-यिकेषु प्रधानतमत्वेन प्रथतेस्म। तर्कवागीशहरिरामः खृष्टषोडशशताब्द्या उत्तरार्धादारभ्य सप्तदशशताब्द्याः पूर्वार्धे आसीदिति निश्चीयते। अनेनावसानसमये स्वचतुष्पाठीप्रधानाध्या-पकपदे स्वशिष्यंगदाधरभट्टाचार्य्यं नियोज्यात्मनः कृतकृत्यत्वं मेने।

एतद्विषये इयं प्रसिद्धिः स्वर्गततर्कवागीशहरिराम-सुरगुरुबृहस्पतिसंवादप्रसङ्गे—

कस्त्वंब्राह्मणवंशजः, कुत इह, श्रीगौड़भूमण्डलात् ।
जाने यत्र गदाधरः, शृणुसखे !, ब्रूते स मां पण्डितम् ।।
श्रुत्वैतद्वचनं बृहस्पतिमुखाच्छ्रीतर्कवागीश्वरो ।
लज्जानन्दमयार्णवे निपतितो नाद्यापि विश्राम्यति ।।१।। इति ।

एतेन नैयायिकमूर्धन्यगदाधरगुरुत्वेन तर्कवागीशस्य पाण्डित्यमथापि प्रशस्तमिति व्यपदिशन्ति नैयायिकाः । अनेन विरचिताः प्रामाण्यवादरहस्यादयोऽनेके ग्रन्थाः सन्ति । नाद्यावधि प्रस्तुतविद्वन्निर्मितसमस्तग्रन्थप्रकाशनं समजनीति नितान्तं दौर्भाग्यमस्माकं नैयायिकानाम् ।

रत्नकोषमतवादार्थकृद्भिस्तर्कवागीशहरिराम-महाशयैस्तु रत्नकोषमतवादार्थ-विरचनच्छलेन तत्त्वनिर्णये प्रमाणमात्रस्य सहकारितामाप्नुवतोलाघवगौरवादिरूपतर्कस्य सूक्ष्मविवेचनोपयोगिनः सूक्ष्मविवेचनमित्थमादर्शितम्, येन समेऽपितार्किकाः सर्वत्र तत्त्वनिर्णयेऽपेक्ष्यमाणस्य लाघवगौरवादिरूपतर्कस्यानुसन्धानमनयैव सरण्या कर्त्तुं समर्थाः स्युः ।

किंच सर्वस्य कार्यजातस्य ज्ञानाधीनतया ज्ञानस्य च विपरीतज्ञानप्रतिबध्यतया विपरीतज्ञानोन्मूलने समर्थस्य प्रतिवध्यप्रतिबन्धकभावविज्ञानस्य तत्त्वजिज्ञासुभिर्नितान्तमपेक्षिततया तद्विज्ञानस्य चानायासेनैतद्ग्रन्थाध्ययनेन यथा सम्पत्तिः न तथेतरस्य कस्यचिदेकस्य ग्रन्थस्याध्ययनेनातोऽतीवोपादेयत्वमस्य ग्रन्थस्य विभावयन्नेवाहमेतद्ग्रन्थसम्पादने व्यापृतचेताः समजनिषि । मया बहुवर्षपूर्वं रत्नकोषमतवादार्थस्यैकस्याः हस्तलिखितमूलमातृकायाः प्रतिलिपिः साधारणजनविहिता समासादिता ।

मूलमातृका प्रयागस्थगङ्गानाथशोधसंस्थानेन क्रीता तत्रैव विराजमाना नाद्यावधि दृष्टिपथमागता । प्रतिलिपेर्नितान्तमशुद्धतयाऽन्यमातृकाणाञ्चाभावेन साधारणश्रमेण शोधयितुमशक्या ममकृते समुद्वेजिकैव समजनि । अतोऽत्र विहितेऽपिश्रमे याः काश्चनाशुद्धयोऽत्र सन्ति निपतितास्ता अवश्यमेतद्ग्रन्थोपादेयताविलसितस्वान्ता नैयायिकाः स्वयं संशोध्यैतद्ग्रन्थप्रचुरप्रचारप्रयासविधानसतृष्णमानसा अवश्यं स्युः ।

आशासे च सति समये ग्रन्थस्यास्य सरलां विवृतिं दिवंगतात्मगुरुवरनैयायिकचक्रचूड़ामणिवामाचरणभट्टाचार्य्यमहाशयानुग्रहेण विधायाहं विद्वत्कुलसेवाव्रतपूर्णमनोरथः कदाचित्स्याम् ।

इत्यलं बहुविज्ञेषु । इति श्रीमतां शोभाकान्तझा जयदेवझाशर्म्मतनुजन्मा ।
प्राध्यापकः, मिथिला संस्कृतविद्यापीठस्थः ।

तिथिः चैत्रशुक्ल प्रतिपत्
२०२२ वैक्रमसंवत्सरः

# रत्नकोषमतवादार्थ—विषयसूची ॥

कल्पने लाघवसंभवेऽपि अप्रामाण्यग्रहाभावादिभिः सममिच्छाऽभावादीनां मिथो विशेष्यविशेषणभावे विनिगमनाविरहेण प्रतिवध्यप्रतिबन्धकभावबाहुल्येन इच्छाया उत्तेजकत्वासंभवमुपपाद्य सम्बन्धघटकविषयत्वस्य वह्निप्रकारकत्वप्रकारतानिरूपितविशेष्यतारूपतया इच्छाविशिष्टान्यत्वस्य कार्यतावच्छेदककोटौ निवेशे पर्वतविशेष्यकवह्निभिन्नप्रकारकचाक्षुषादिसामग्र्यसमवहिते पर्वते यत्किञ्चित्प्रकारकचाक्षुषं जायतामित्येतादृशेच्छाधीने पर्वतधर्मिकवह्निचाक्षुषादौ व्यभिचारं प्रदर्श्य तद्वारणाय तत्तदिच्छाव्यक्तित्वेन तत्तदिच्छाविशिष्टान्यत्वस्य जन्यतावच्छेदककुक्षौ निवेशे महागौरवं प्रदर्श्येच्छाया उत्तेजकत्वस्यैव साधीयस्त्वोपपादनम्

८ — २१ समुच्चये व्यभिचारवारणाय तदभावव्याप्यवत्तानिर्णयाभावजन्यतावच्छेदक
९ — १० कुक्षौ विरोधविषयकत्वस्यावश्यं निवेशनीयतया आहार्यज्ञाने विरोधभानानुपगमेन इच्छाया उत्तेजकत्वासंभवमुपपाद्याहार्यसंशयानुरोधेनाहार्यज्ञाने विरोधविषयताभ्युपगमेन विरोधविषयतायाः प्रतिवध्यतावच्छेदककुक्षावनिवेशेऽपि इच्छावदव्याप्यवृत्तित्वज्ञानस्योत्तेजकत्वमनुसृत्य समुच्चये व्यभिचारवारणसंभवेन विरोधविषयतायाः प्रतिवध्यतावच्छेदककोटावनिवेशेन चेच्छाया उत्तेजकत्वोपपादनम् ।

९ — ११, विशेष्ये विशेषणमितिरीत्या वह्न्यादिविशिष्टबुद्धित्वस्यैव तदभावव्याप्य-
१५ वत्तानिर्णयप्रतिवध्यतावच्छेदकत्वेन तादृशनिर्णयसत्त्वे इच्छादशायां विशिष्टवैशिष्ट्यबोधात्मकप्रत्यक्षोत्पत्त्या इच्छाया उत्तेजकत्वासंभवोपपादनम् ।

९ — १६ पर्वतो वह्निमानित्यत्र विशेष्ये विशेषणमिति रीत्या बोधस्य विशिष्टवैशिष्ट्-
१० — ६ यावगाहिबोधाद् वैलक्षण्योपपादनम् ।

१० — ७, पर्वतो वह्निमानित्यत्र विशिष्टवैशिष्ट्यबोधस्य वह्नित्वप्रकारतानिरूपित-
२२ विशेष्यत्वाभिन्नपर्वतत्वावच्छिन्नविशेष्यतानिरूपितप्रकारताशालिबुद्धित्वरूप - प्रतिवध्यतावच्छेदकाक्रान्तत्वेऽपि वह्नित्वानवच्छिन्नवह्नित्वप्रकारतानिरूपितविशेष्यत्वाभिन्नपर्वतत्वावाच्छिन्नविशेष्यतानिरूपितप्रकारतायाः प्रतिवध्यतावच्छेदककोटौनिवेशेनोक्तबोधस्यवह्नित्वावच्छिन्नवह्नित्वप्रकारतानिरूपितविशेष्यत्वभिन्नविशेष्यतानिरूपितप्रकारताशालित्वेन नानुपपत्तिरित्युपपादनम् ।

१० — २२, वह्नित्वानवच्छिन्नवह्नित्वप्रकारतानिरूपितविशेष्यत्वाभिन्नविशेष्यतानिरूपित-
११ — २८ प्रकारताशालिबोधे वाह्नित्वप्रकारकज्ञानस्यप्रतिबन्धकत्वस्यवह्नित्वप्रकारकज्ञाननियतानांविरोधिसामग्रीणांविशेष्येविशेषणमितिरीत्याबोधेप्रतिवन्धकत्वाकल्पनप्रयुक्तलाघवेनावश्यकतयाऽनाहार्यविशिष्टवैशिष्ट्यबोधस्यतदप्रतिवध्यत्वमाशङ्क्य् वह्नित्वप्रकारकज्ञाननियतविरोधिसामग्र्याः प्रतिवध्यतावच्छे-

दककोटौ उभयबोधसाधारणवह्नित्वप्रकारतानिरूपितविशेष्यत्वाभिन्नपर्वत - त्वावच्छिन्नविशेष्यतानिरूपितप्रकारतायाः निवेशेनैकप्रतिबन्धकत्वं स्वीकृत्य 'विशिष्टवैशिष्ट्यबोधोजायताम्', 'विशेष्येविशेषणमितिरीत्याबोधोजायताम्,' इत्येतादृशेच्छयोः वह्नित्वप्रकारतानिरूपितविशेष्यत्वाभिन्नतादृशप्रकारत्वशालिबोधत्वप्रकारकेच्छात्वेनानुगमय्यतयोस्तत्रनिवेशेऽपि भिन्न विषयकानुमितिसामग्रीकालीनस्य विशिष्टवैशिष्ट्यबोधत्वप्रकारकेच्छासत्त्वेविशेषणतावच्छेदकप्रकारकज्ञानासत्त्वे विशेष्येविशेषणमितिरीत्याबोधस्य वह्नित्वप्रकारकज्ञाननियतविरोधिसामग्रीदशायां विशेषणतावच्छेदकप्रकारकज्ञानस्यावश्यकतया वारणसंभवेन विशेष्येविशेषणमितिरीत्याबोधेविशेषणतावच्छेदकप्रकारकज्ञानप्रतिबन्धकतायाः प्रयोजनविरहेणाकल्पनात् वह्नित्वानवच्छिन्नायावह्नित्वप्रकारतानिरूपितविशेष्यत्वाभिन्नविशेष्यतानिरूपितप्रकारताया अनाहार्यविशिष्टवैशिष्ट्यबोधसाधारण्येबाधकाभावात् न काप्यनुपपत्तिरित्युपदर्शनम् ।

११ — २६
१२ — १२
तदभावव्याप्यवत्तानिर्णयशून्यदशायमिच्छांविनापि विशिष्टवैशिष्ट्यप्रत्यक्षात्मकबोधस्योदयेनेच्छायास्तादृशबोधाहेतुत्वेऽपि वह्नित्वानवच्छिन्नप्रकारताशून्यवह्नित्वावच्छिन्नप्रकारकचाक्षुषत्वावच्छिन्नंप्रति वह्नित्वावच्छिन्नप्रकारक चाक्षुषेच्छात्वेनहेतुतया तदभावव्याप्यवत्तानिर्णयादिशून्यकालीनतादृशविशिष्टवैशिष्ट्यबोधस्य द्विविधविषयताशालित्वेनैवव्यभिचारवारणात् नेच्छां विनातदभावव्याप्यवत्तानिर्णयादिकालेविशिष्टवैशिष्ट्यप्रत्यक्षप्रसङ्ग इतिप्रदर्शनम् ।

१२ — १२
१३ — १७
अनुमितिप्रयोजकीभूतसामग्रीव्याप्तौ प्रयोजनविरहेण तदभावव्याप्यवत्तानिर्णयाभावस्यानिवेशेन उभयव्याप्यवत्तानिर्णयकाले तत्प्रयोजकीभूतसामग्र्या अक्षतत्वेन विशिष्टवैशिष्ट्यावगाहिनीं संशयानुमितिमाशङ्क्य तन्निराकरणम् ।

१३ — १८
१४ — १५
पर्वतोवह्निमानित्याकारकानुमितिंप्रति वह्नित्वप्रकारकज्ञाननियतानामिच्छाविशिष्टवह्निमन्महानसमित्याकारकशाब्दबोधादिसामग्रीणां प्रतिबन्धकतया तन्निरूपितप्रतिवध्यतावच्छेदककोटौ वह्नित्वानवच्छिन्नप्रकारताया निवेशेन इच्छाकाले च केवलविशिष्टवैशिष्ट्यबोधात्मकानुमित्यादेरुपगमेन तादृशप्रतिबन्धकतायामिच्छाया उत्तेजकत्वानभ्युपगमेन उभयव्याप्यवत्ताज्ञानकाले तादृशप्रकारताशून्यसंशयानुमितौ नकिञ्चिद्बाधकम्, किंच तदभावव्याप्यवत्ताज्ञानप्रतिवध्यतावच्छेदककोटौनित्यसाधारण्यवारणाय जन्यत्वनिवेशे विनाशित्वस्य कालिकादिसम्बन्धेन घटादिमत्त्वस्य वा निवेशमादायविनिगमनाविरहेणानन्त्यप्रसङ्गेन चाक्षुषत्वादीनामेव प्रतिवध्यतावच्छेदकत्वौचित्येन संशयानुमितौ न काचिदनुपपत्तिरितिप्रदर्शनम् ।

१४ — १६, लौकिकसंनिकर्षजन्यबुद्धौ व्यभिचारवारणाय लौकिकविषयताशून्यत्वस्यप्रति-
२४ वध्यतावच्छेदककोटौनिवेशेनवह्न्यादिविशिष्टबुद्धिस्थलीयप्रतिवध्यतावच्छेद-कस्यनित्यव्यावृत्तत्वोपपादनेऽप्यतीन्द्रियगुरुत्वादिपदार्थविशिष्टबुद्धिस्थलीय-प्रतिवध्यतावच्छेदककोटौतन्निवेशस्यासंभवेनचाक्षुषत्वादीनामेवप्रतिवध्यताव-च्छेदकत्वस्यावश्यकतयातत्स्थलीयसंशयानुमितेः सम्भवशङ्कनम् ।

१४ — २५ पर्वतत्वावच्छिन्नविशेष्यकवह्न्यभावव्याप्यवत्तानिर्णयादिप्रतिवध्यतावच्छेद—
१६ — २८ कत्वस्यानुमित्यादिसाधारणतदभावव्याप्यवत्त्वरूपविशिष्टधर्मानवच्छिन्नपर्व-तत्वावच्छिन्नविशेष्यतानिरूपितवह्न्यादिप्रकारताशालिज्ञानत्वादावेव स्वीकर-णीयतया तदभावव्याप्यवत्तानिर्णयकालीनेच्छाकालीनविशिष्टबुद्धौतदभावव्या-प्यादीनांतद्विशेष्यतावच्छेदकतया भानेन संशयानुमितिप्रसङ्गं दूरीकृत्येच्छोत्ते-जकतापक्षेगौरवंप्रदर्श्यैच्छायाअनुत्तेजकत्वेऽपिनित्यसाधारण्यवारणायचाक्षुषत्वा-दीनांप्रतिवध्यतावच्छेदकतायाआवश्यकत्वेन संशयानुमितिसंभवोपपादनम् ।

१७ — १ केचिदित्यारभ्याहुरित्यन्तसन्दर्भेणप्रत्यक्षस्थलेचाक्षुषत्वादेः प्रतिवध्यतावच्छेद-
१९ — २३, कत्वेऽपि शाब्दोपमितिस्मृतिषुशाब्दत्वाद्यवच्छेदेननानाप्रतिवध्यताकल्पनापेक्षया प्रत्यक्षान्यज्ञानत्वावच्छेदेनैकप्रतिवध्यताकल्पनौचित्येनानुमितेरपितदाक्रान्त—तयासंशयानुमितेरसम्भवस्यप्रसङ्गेन प्रत्यक्षान्यत्वविशिष्टज्ञानत्वापेक्षया शाब्दत्वादिनाप्रतिवध्यतायांगौरवस्य च प्रदर्शनम् ।

१९ — २४ तदभावव्याप्यवत्तानिर्णयाभावकार्यतावच्छेदकानां एकत्रद्वयमितिरीत्या
२१ — २५ ज्ञानांशे विशेषणतापन्नानांमिथोविशेष्यविशेषणभावानापन्नां वह्निप्रकारकत्व-प्रत्यक्षान्यत्वज्ञानत्वानामेकावच्छेदकत्वंप्रकल्प्यावच्छेदकताया भेदाभावेन कार्यकारणभावस्यैकत्वरूपलाघवं यत्प्रदर्शितम् तन्नसमचीनम्, प्रत्यक्षभेदा-दिनिष्ठाया अवच्छेदकतायाः सावच्छिन्नत्वेन स्वावच्छेदकधर्मसम्बन्धभेदेन-भेदावश्यकत्वात् । एवं चावच्छेदकताया व्यासज्यवृत्तित्वाभावेन. वह्नि-प्रकारकप्रत्यक्षान्यज्ञानत्वस्य कार्यतावच्छेदकत्वे वह्निप्रकारकत्वविशिष्टं यत्प्रत्यक्षान्यत्वं तद्विशिष्टज्ञानत्वम्, प्रत्यक्षान्यत्वविशिष्टं यद्वह्निप्रकारकत्वं तद्विशिष्टं ज्ञानत्वंवाऽवच्छेदकमित्यत्रविनिगमनाविरहात् ज्ञानत्वमवच्छेदकी-कृत्यकार्यकारणभावद्वयम्, एवंप्रत्यक्षान्यत्वं वह्निप्रकारकत्वमवच्छेदकीकृत्य प्रत्येकंद्वयंद्वयं कल्पनीयम् । शाब्दत्वादीनामवच्छेदकत्वकल्पेऽपि वह्निप्रकारक-त्वविशिष्टशाब्दत्वं शाब्दत्वविशिष्टं वा वह्निप्रकारकत्वमवच्छेदकमित्यत्र-विनिगमनाविरहात् शाब्दस्थले कार्य्यकारणभावद्वयम्, एवमुपमितिस्मृ-त्योरपि प्रत्येकं कार्यकारणभावद्वयमितिसाम्यंप्रत्यक्षान्यत्वस्यावच्छेदकत्वे-पुनरवच्छेदकगौरवमधिकमिति, एवं च संशयानुमितौनकिञ्चिददनुपपत्ति-रित्युद्भावितमिदमत्र चिन्तयाम इत्यारभ्य विनिगमकलेशोऽपीत्यन्तग्रन्थेन ।

२२ — १९ शाब्दत्वादिनानाधर्मावच्छेदेनप्रतिवध्यत्वकल्पनापेक्षया लाघवात्परोक्षज्ञाने
२६ — ६ जातिमेकांस्वीकृत्यतदवच्छिन्नत्वेनतदभावव्याप्यवत्ताज्ञानप्रतिवध्यताकल्पनेन
संशयानुमित्यसंभवप्रदर्शनम् ।

३३ — २३ तत्प्रकारकचाक्षुषत्वावच्छिन्नंप्रतिचाक्षुषेच्छाविरहविशिष्टतदभावव्याप्यवत्ता-
३६ — २ निर्णयत्वादिना नानाप्रतिबन्धकत्वकल्पनापेक्षया लाघवेन तदभावव्याप्यवत्ता-निर्णयाभावविशिष्टबुद्धित्वावच्छिन्नं प्रति तदभावव्याप्यवत्तानिर्णयत्वेनैकप्रतिबन्धकत्वकल्पनेनाहार्य्यज्ञाने व्यभिचारवारणसंभवेन तदभावव्याप्यनिर्णयाभावविशिष्टबुद्धिं प्रति क्लृप्तहेतुताकतन्निर्णयस्य जन्यतावच्छेदककोटौ विषयमनिवेश्य तादृशनिर्णयाभावस्यैवप्रवेशेन संशयानुमित्यसंभवप्रदर्शनम् ।

३६ — ३, तदभावव्याप्यवत्ताज्ञानाभावविशिष्टत्वस्य जन्यतावच्छेदकत्वेऽपि परामर्शघटि-
११ तसामग्रीव्याप्तौ तदभाव-व्याप्यनिर्णयाभावाप्रवेशे तादृशनिर्णयघटितविरोधिसामग्र्यभावस्यप्रवेशेनगौरवात् तदपेक्षयालाघवेनतादृशनिर्णयाभावस्यैव प्रवेशेनोभयव्याप्यवत्ताज्ञानकालेऽनुमित्यसंभवप्रदर्शनम् ।

३६ — १२ अनुमितिंप्रति तदभावव्याप्यवत्तानिर्णस्य प्रतिबन्धकत्वे विभिन्नविषयकप्रत्यक्षादिकंप्रति अनुमितिसामग्रीप्रतिबन्धकतायां तादृशनिर्णयाभावप्रवेशेनगौरवं प्रदर्श्य तदुद्धारप्रकारनिरूपणम् ।

३८ — २३ अनुमितिसामग्रीप्रतिबन्धकतायां तदभावव्याप्यवत्तानिर्णयाभावनिवेशे तदभाव्याप्यवत्तानिर्णयकालीनानां प्रत्यक्षादिगोचरेच्छामामुत्तेजकत्वानभ्युपगमेन लाघवनिरूपणम् ।

३९ — २४ यत्रवह्निव्याप्यवान् अभावव्याप्यवांश्चपर्वत इतिपरामर्शोत्तरं लाघवादिज्ञान-
४० — २४ वशात्पर्वतत्वविशिष्टेवह्नेरभावस्यचानुमितौजायमानायांमहानसीयत्वंवह्न्यंशेप्रतियोगितया महानसीयवह्निरभावांशेच भासते, तत्रसंशयानुमितेर्दुर्वारत्वंनिरूप्य लाघवज्ञानादिघटिततद्धर्मावच्छिन्नानुमितिसामाग्रीकाले तदन्यधर्मावच्छिन्नप्रकारकशाब्दबोधादिवारणायैतादृशसामग्र्याः प्रतिबन्धकत्वावश्यकत्वे तत्रैवानुमितिसाधारण्याः परोक्षत्वजातेः प्रतिवध्यतावच्छेदकत्वमभ्युपेत्य तादृशानुमितिवारणनिरूपणम् ।

४० — २५ अनुमितिसाधारणधर्मस्य तत्प्रतिवध्यतावच्छेदकत्वे तत्रानुमितेरनुत्पत्त्या
२ — ४ प्रत्यक्षोत्पादावश्यकतया तदुपपत्तये भिन्नविषयकप्रत्यक्षादिसामग्रीप्रतिवन्धकतायां लाघवज्ञानघटितविरोधिसामग्रयभावनिवेशेन महागौरवंप्रदर्श्य तादृशलाघावज्ञानघटितोभयकोट्यनुमितिसामग्रीदशायां पर्वतोवह्निमान्पर्वतोऽभाववानित्येतादृशसिद्धिसत्त्वे महानसीयवह्नितदभावयोरन्यतरस्यशाब्दसामग्रीसत्त्वेऽनुमितेरनुदयेन शाब्दबोधस्यावश्यकत्वात् शाब्दस्थलीयलाघवज्ञानघटितानुमितिसामग्रीप्रतिबन्धकतायां तथाविधापरकोट्यनुमितिसामग्रयभावस्यावश्यं निवेशनीयतया संशयानुमितिसंभवोपपादनम् ।

४२ — ५ अनुमितिंप्रतिलाघवज्ञानघटितविरोधिकोट्यनुमितिसामग्र्याः पृथक्
४६ — १४ प्रतिबन्धकत्वंप्रकल्प्य संशयानुमितिप्रसङ्गवारणपुरस्सरमेतत्पक्षेलाघव-निरूपणम् ।

४६ — १४ विशेष्यतावच्छेदकसामानाधिकरण्येनोभयकोटिमवगाहमानाया बुद्धेरपि
४६ — १८ संशयत्वे सामानाधिकरण्येनकोट्यनुमितिं प्रति तथाविधापरकोट्यनुमिति-सामग्रयाः पृथक्प्रतिबन्धकत्वे लाघवंनिरूप्य तादृशप्रतिवध्यप्रतिबन्धकभाव-कल्पनेनैव विशेष्यतावच्छेदकसामानाधिकरण्यमात्रेणोभयव्याप्यवत्तापराम-र्शात् सामानाधिकरण्येनोभयकोट्यवगाहिसंशयानुमित्यसंभवप्रदर्शनम् ।

४६ — १६ सामानाधिकरण्येनैककोट्यनुमितिंप्रति , तथाविधापरकोट्यनमितिसामग्र्याः
५० — ६ अनुमितिं प्रतिलाघवज्ञानघटितविरोधिकोट्यनुमितिसामग्र्याश्च पृथक् प्रतिबन्धकत्वे लाघवाभावेऽपि भिन्नविषयकप्रत्यक्षादौ तत्प्रतिबन्ध-कत्वस्येच्छाया उत्तेजकत्वकल्पनायाश्चानादरेणानुमिति साधारणतादृश-सामग्रयनुत्तरत्वस्य प्रतिवध्यतावच्छेदकत्वोपगमेन तादृशप्रतिबन्धकतयैव संशयानुमित्यसम्भवप्रदर्शनम् ।

ॐ नमो महादेवाय ।

# रत्नकोषमतवादार्थः

**परोक्षज्ञानं निश्चयात्मकमेवेति सिद्धान्तः ।**

रत्नकोषकारस्तु सत्प्रतिपक्षसम्मिलनदशायां[१] संशयात्मिकामनुमितिं स्वीकरोति । तत्र संशयत्वस्य लिङ्गपरामर्शादिजन्यतानवच्छेदकतया कथं ततः संशय उत्पद्यत इति नाशङ्कनीयं, संशयत्वस्य जन्यतानवच्छेदकत्वेऽपि एकधर्मिकविरुद्धो[२]भयव्याप्यवत्ताज्ञानदशायाम् अर्थवशादेव[३] एकधर्मिकविरुद्धोभयधर्मप्रकारकज्ञानत्वरूपसंशयत्वावच्छिन्नोत्पत्तेरावश्यकत्वात् । अत एव सामग्रीसमाजादेव सर्वत्र संशयोत्पत्तिनिर्वाहाद् विरुद्धनानाधर्मप्रकारकज्ञानत्वादिरूपसंशयत्वं कस्यापि न जन्यतावच्छेदकमिति नव्याः । न चैकधर्मिकविरोध्युभयव्याप्यवत्तानिर्णयदशायामेकधर्मिकवास्तवविरुद्धोभयधर्मप्रकारकानुमित्युत्पत्तावपि तत्र प्रयोजनविरहेण[४] विरोधभानस्याकल्पनात् तादृशानुमितेर्विरोधावगाहित्वं न सम्भवतीति कथं तस्याः संशयत्वं विरोधविषयकज्ञानस्यैव तथात्वादिति वाच्यं, वह्न्यभावविरुद्धवह्नित्वादिना व्यापकत्वावगाहिपरामर्शस्य तेनैव रूपेण वह्न्याद्यनु[५]मित्युत्पादकतया तादृशपरामर्शकालीनविरुद्धोभयप्रकारकानुमितौ तत एव विरोधभानसम्भवात् ।

एककोटिव्याप्यवत्तानिर्णयस्यापरकोट्यनुमितिप्रतिबन्धकत्वात् कथमुभयव्याप्यवत्ताज्ञानकालेऽनुमितिरिति तु नाशङ्कनीयं, तादृशप्रतिवध्यप्रतिबन्धकभावे मानाभावात् ।

अथैतन्मते सत्प्रतिपक्षस्य हेत्वाभासतानुपपत्तिर्न च तन्मते चत्वार एव हेत्वाभासा[६] इति, सूत्रविरोधात् । रत्नकोषकृतोऽपि नैयायिकत्वेन तत्सिद्धान्तापलापासंभवादिति चेन्न, निर्णयानुमितिविघटकत्वेनैव[७] तदुपपत्तेः । तत् किं निर्णयानुमितिवत्वावच्छिन्नं प्रति[८] तदभावव्याप्यवत्तानिश्चयाभावस्य हेतुत्वम्[९]? तथा सति निश्चयत्वं प्रतिवध्यविशेषणं दीयतामिति[१०] चेन्न, विपरीतकोटिभासकसामग्री-

---

१ समूलन० मा । २ द्ध उ० मा० । ३ वसा० मा । ४ भाषकस्या० मा । ५ घन्न० मा। ६ षा० मा। ७ यमा० मा । ८ तनु० मा। ९ ताताख्याप्य० मा। १० त्यय्य० ।

विरहस्य निश्चयत्वावच्छिन्नं प्रत्यजनकत्वेऽपि ज्ञानस्य निश्चयत्वघटकविरोध्यप्रकारकत्वं प्रत्यविरोधिधर्मान्तराप्रकारकत्वे[1] सति तत्प्रकारकज्ञानसामग्रीविरहस्यैव प्रयोजकत्वात्। तादृशसामग्र्या निश्चयत्वावच्छिन्नोत्पत्तिविघटकत्वात्।

अथ तदत्यन्ताभावतद्वदन्योन्याभाववत्त्वनिर्णयदशायां तदनुमितेरनुदयात् तदनुमितिं प्रति तद्[2]वदन्योन्याभावतदत्यन्ताभाववत्तानिर्णययोः प्रतिबन्धकत्वकल्पनमावश्यकं, तत्र च तदत्यन्ताभाववत्तानिर्णयत्वादिना विशिष्य नानाप्रतिबन्धकत्वकल्पनापेक्षया तदत्यन्ताभावतद्वदन्योन्याभावौ तद्विरोधित्वेनानुगमय्य तद्विरोधिधर्मप्रकारकनिर्णयत्वेनैकं प्रतिबन्धकत्वं कल्प्यते। तादृशप्रतिबन्धकतावच्छेदकाक्रान्तश्च तदभावव्याप्यवत्तानिर्णयोऽपीति कथमुभयव्याप्यवत्तानिर्णयकालेऽनुमि[3]तिरिति चेत्? अत्यन्ताभावादिमत्तानिर्णयस्य प्रतिबन्धकत्वं वास्तवतद्विरोधिधर्मप्रकारकज्ञानत्वेन तद्विरोधावगाहिज्ञानत्वेन वा? आद्ये प्रमेयत्वत[4]द्व्यक्तित्वादिना तदभावादिम[5]त्तानिर्णयदशायामपि तदनु[6]मित्यनुदयप्रसङ्गः। वह्निव्याप्यद्रव्यत्ववान् वह्न्यभावव्याप्यपाषाणमयत्ववान् पर्वत इत्यादिपरामर्शात् पर्वतो वह्निमान्न[7] वेत्याकारानुमितौ बाधकाभावः, पाषाणमयत्वद्रव्यत्वयोर्वह्नितदभावाविरुद्धत्वात्। अन्त्ये[8] विरोधानवगाहिनो वह्न्यभाववान् पर्वत इत्यादिनिर्णयस्य वह्न्याद्यनुमित्यविरोधित्वप्रसङ्गः। अपि च कालिकादिसम्बन्धेन वह्न्यभावादिमत्तानिर्णयस्य वह्न्या[9]द्यनुमित्यविरोधितया वह्न्याद्यनुमितौ वह्न्य[10]भावादिमत्ताज्ञानस्य प्रतिबन्धकतायां दैशिक[11]विशेषणतासंसर्गकत्वं[12] निवेश[13]नीयं। तथा च समवायादिसंसर्गकवह्न्यभावव्याप्यपाषाणमयत्वादिप्रकारकनिर्णयस्य तादृशप्रतिबन्धकतावच्छेदकानाक्रान्ततया तादृशपरामर्शकाले संशयानुमित्यापत्तेर्दुर्वारत्वात्।

अथ तदभावव्याप्यवत्तानिर्णयकाले तत्प्रकारकस्योपनीतभानशा[14]ब्दादेरनुदयात् तत्र तत्प्रतिबन्धकत्वकल्पनमावश्यकं, तत्र चोपनीतभानत्वशाब्दत्वादिनानाधर्मावच्छेदेन प्रतिबध्यत्वकल्पनापेक्षया लाघवात् लौकिकान्यतत्प्रकारकज्ञानत्वावच्छेदेनैव तथात्वमुपेयते, तादृशप्रतिबध्यतावच्छेदकाक्रान्तभावोऽनुमितेरपीति न संशयानुमितिप्रसङ्गः।

यत्तु धर्मितावच्छेदकसामानाधिकरण्यमात्रावगाहितद्विशिष्टबुद्धौ तथाविधतदभावव्याप्यवत्तानिर्णयादीनामविरोधितया पर्वतत्वादिसामानाधिकरण्यमात्रावगाहिवह्नि[15]तदभावाद्युभयव्याप्यवत्तानिर्णयानन्तरं पर्वतत्वसामानाधिकरण्य-

१ त्वे तत्प्रका० मा। २ तत्वदन्यो० मा। ३ मीति० मा। ४ तुत्तद्० मा। ५ सत्ता० मा। ६ दन्ना० मा। ७ न्नु० मा। ८ अन्ये मा। ९ वह्न्यद्य० मा। १० बध्य० मा। ११ देशेक० मा। १२ त्वी मा। १३ नीरसनीयं मा। १४ शब्दा० मा। १५ वह्न्य० मा।

मात्रावगाहिसंशयानुमितौ[1] न किञ्चिद् बाधकमिति । तदसत्, अव[2] च्छेदकावच्छेदेनएककोट्यवगाहिज्ञानस्यैव संशयतया तादृशानुमितेः संशयत्वाभावात् । तथा हि एकधर्मावच्छिन्नविशेष्यताकविरुद्धोभयधर्मप्रकारकज्ञानत्वं न संशयलक्षणं विभिन्नरूपेण[3] एकधर्मं धर्मितावच्छेदकीकृत्य विरुद्धकोटिद्वयमवगाहमानानां संशयत्वप्रसङ्गात् । एकधर्मावच्छिन्नविशेष्यतावच्छेदकताकत्वनिवेशे च निरवच्छिन्नविशेष्यतावच्छेदकताकसंशया[4] संग्रहः । विभिन्न[5] रूपेण विशेष्यतावच्छेदकतावच्छेदकमवगाहमानेऽतिप्रसङ्गस्य[6] दुर्वारतेति स्वीयैक[7] कोटिप्रकारतावच्छिन्नप्रतिवध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतापरकोटिप्रकारताकज्ञानत्वमेवसंशयलक्षणं । तच्च न धर्मितावच्छेदकसामानाधिकरण्यमात्रेण उभयकोट्यवगाहिज्ञानसाधारणं शुद्धविशेषणतादिसंसर्गावच्छिन्नाभावादिप्रकारतायाः शुद्धसंयोगसंसर्गावच्छिन्नप्रकारतावच्छिन्नप्रतिवध्यतानिरूपितप्रतिबन्धकतानवच्छेदकत्वात् । अत एव संशयस्याप्रमात्वनियमोऽप्युपपद्यते । अवच्छेदकसामानाधिकरण्यमात्रेणोभयकोटिमवगाहमानस्यापि ज्ञानस्य संशयत्वे क्वचित् तादृशज्ञानस्योभयकोट्यंशे[8] प्रमात्वसम्भवात्तदनुपपत्तेरिति[9] चेत्—स्यादेवं, यदि तदभावव्याप्यवत्तानिर्णयस्य प्रत्यक्षानुमितिसाधारणलौकिकान्यतद्विशिष्टबुद्धित्वावच्छेदेन प्रतिवध्यता कल्पयितुं शक्येत,[10] तदेव न, इच्छाया[11] उत्तेजकत्वानुरो[12]धेन विशिष्य लौकिकान्यतत्प्रकारकचाक्षुषत्वा[13] द्यवच्छेदेन एव तथात्वस्य कल्पनीयत्वात् । तथा हि तदभावव्याप्यवत्तानिर्णये सत्यपि सत्यां तत्प्रकारकचाक्षुषेच्छायाम् आहार्य[14] तत्प्रकारकचाक्षुषोत्पत्त्या तादृशेच्छाया उत्ते[15] जकत्वं स्वीकरणीयं, तत्र चाक्षुषस्पा[16] र्शनादिगोचरेच्छासमूहानां तत्प्रकारकज्ञानगोचरेच्छात्वेन तत्प्रकारकप्रत्यक्षगोचरेच्छात्वेन वा उत्तेजकत्वं यदि स्वी[17] क्रियते, तदा पर्वतो वह्न्य[18] भावव्याप्यवानित्याकारकनिर्णयदशायां पर्वते वह्निस्पा[19] र्शनं जायतामित्याकारकेच्छासत्त्वे असत्यां स्पार्श[20] नादिसामग्र्यां पर्वतो वह्निमानित्याकारकचाक्षुषाप[21] त्तिरतस्तत्प्रकारकचाक्षुषत्वावच्छिन्नं प्रति तत्प्रकारकचाक्षुषेच्छाविरहविशिष्टतदभावव्याप्यवत्तानिर्णयत्वादिना प्रतिबन्धकता कल्पनीया । इत्थञ्चानुमितिस्थले प्रयोजनविरहेण तत्प्रतिबन्धकताया अकल्पनात् संशयानुमितौ नानुपपत्तिलेशोऽपि । अथ पर्वते वह्निचाक्षुषं जायतामित्याकारकनिखिलेच्छानां पर्वतधर्मिकवह्निप्रकारकचाक्षुषादिगोचरेच्छात्वेनानुगमय्य उत्तजकत्वं

१ मीतौ मा। २ अनव० मा। ३ कल्पन मा। ४ यस० मा। ५ न्नकल्पन मा। ६ श्च मा। ७ य ए० मा। ८ द्य० मा। ९ ताति मा। १० शक्या मा। ११ योतुत्ते० मा। १२ बो० मा। १३ त्वाव्यवच्छे० मा०। १४ तंप्र० मा। १५ तत्तेजकत्व० मा। १६ स्पर्शयादि० मा। १७ क्रीय मा। १८ तारव्याप्य० मा। १९ स्पर्शनं मा। २० स्पर्शनादिसामग्र्यं मा। २१ प्रति० मा।

न सम्भवति, पर्वते यत्किञ्चिद्गोचरचाक्षुषं जायतामित्येतादृशेच्छासत्त्वे घटादिचाक्षुषसामग्रीसत्त्वे[1] पर्वतो वह्न्यभावव्याप्यवानितिनिर्णयदशायां पर्वतो वह्निमानित्यादिचाक्षुषापत्तेः। पर्वतधर्मिकवह्निप्रकारकत्वप्रकारकचाक्षुषेच्छात्वादिना तथात्वे तु तादृशेच्छासत्त्वे पर्वते वह्निभिन्नप्रकारकचाक्षुषादिसाम[2]-ग्रयामसत्यामपि पर्वतो वह्निमानित्यादिचाक्षुषाद्यनुपपत्तिरतस्तदभावव्याप्यवत्तानिर्णयसत्त्वे यद्[3]यदिच्छासत्त्वे तत्प्रकारकचाक्षुषादिकं जायते तत्तदिच्छाव्यक्तीनां तत्तद्व्यक्ति[4]त्वेनैवोत्तेजकत्वं स्वीकरणीयम्। इत्थञ्च चाक्षुषस्पा[5]र्शनादिगोचर[6]-सकलेच्छामुत्तेजकीकृत्य एकप्रतिवध्यप्रतिबन्धकभावोऽपि शक्यते कल्पयितुम्, स्पा[7]र्शनादिसामग्र्यसमवधानकाले स्पा[8]र्शनादिगोचरेच्छानामुत्तेजकत्वानभ्युपगमेनातिप्रसङ्गाभावादिति चेन्न। पर्वते वह्निचाक्षुषं जायतां पर्वते वह्निस्पा[9]र्शनं जायतामित्याद्याकारि[10]काणां पर्वतधर्मिकवह्निप्रकारकत्वप्रकारकचाक्षुषस्पार्शनादिगोचरेच्छात्वेनानुगमस्य उत्तेजकत्वसंभवात्तासां तद्व्यक्तित्वेनोत्तेजकत्वे प्रयोजनविरहेणैव[11] न तथात्वमुचितम्। किन्तु पर्वते यत्किञ्चित्प्रकारकं चाक्षुषं जायतामित्याकारकेच्छानां तत्तद्व्यक्तित्वेनेति। एवञ्च सर्वसाधारणै[12]कप्रतिवध्यप्रतिबन्धकभावोपगमे पर्वते वह्निस्पार्शनंजायतामित्याकारकेच्छाकाले चाक्षुषापत्तिर्दुर्वारैवेति। न चैकप्रतिवध्यप्रतिबन्धकभावानुरो[13]धेन सर्वासामेवेच्छानां तत्तद्व्यक्तित्वेनोत्तेजकत्वं कल्पयितुमुचितमिति वाच्यम्, अनुगतकल्पन[14]-सम्भवदुत्तेजिकानामिच्छानां तत्तद्व्यक्तित्वेनोत्तेजकत्वे एकैकाभावस्थलेऽनन्ताभावानां निवेशेन तेषां मिथो विशेषणविशेष्यभावे[15] विनिगमनाविरहेणानन्त्यप्रसङ्गात्। न च तावदभावकूट[16]विशिष्टतदभावव्याप्यवत्तानिर्णयाभावव्यक्तेस्तद्व्यक्तित्वेन हेतुत्वान्नोक्त[17]विनिगमनाविरहेण कारणताव[18]च्छेदकानन्त्यमिति वाच्यम्, अभावस्य तत्तद्व्यक्तित्वेन हेतुतायाः सिद्धान्तविरुद्धत्वात्। तथा सति तदभावव्याप्यवत्तानिर्णयघटाद्यन्यतरत्वावच्छिन्नाभावानां तत्तद्व्यक्तित्वेन हेतुतामादायापि विनिगमनाविरहप्रसङ्गात्। मिथो विशेष्यविशेषणभावानापन्नतावदुत्तेजकाभावकूट[19]प्रतिबन्धकतावच्छेदकताया व्यासज्यवृत्तित्वोपगमान्न विनिगमनाविरह इत्यपि न सम्यक् अवच्छेदकताया व्यासज्यवृत्तित्वस्याग्रे निरस्यत्वात्। अथ चाक्षुषस्पार्शनादिगोचरेच्छानां स्ववृत्तिप्रत्यक्षविषयकत्वसम्बन्धेन कृतिविशि-

---

१ षत्वे मा। २ साममसत्या० मा। ३ यद्वदि० मा। ४ क्तीत्वे० मा। ५ स्पर्शं मा। ६ चच मा। ७ स्पर्शेणा० मा। ८ स्पर्शेणा० मा। ९ स्पर्शेनं मा। १० कारकालान्तराणां मा। ११ णैव त० मा। १२ ण प० मा। १३ बोधे० मा। १४ कल्पनुसम्भवमुत्ते-जकत्ताकाना० मा। १५ वो मा। १६ कुट० मा। १७ त्वोक्त० मा। १८ वहेमिति मा। १९ कूट० मा।

ष्टेच्छात्वेनानुगमय्य एकत्रैवोत्तेजकत्वं स्वीक्रियते, स्ववृत्तित्वञ्च कालिकविशेषणतया बोध्यम्, उपदर्शितस्पार्शनगोचरेच्छायास्तेन सम्बन्धेन न कृतिविशिष्टत्वं तादृशेच्छाविषयीभूतस्पार्शनादेस्तदानीन्तनकृतिवृत्तित्वाभावात्, भिन्नकालीनानामाधाराधेयभावविरहात् । अतो नोक्तस्थले चाक्षुषाद्यापत्तिरिति चेन्न, एतादृशसम्बन्धेन कृतिविशिष्टेच्छाया उत्तेजकत्वे तादृशविशिष्टेच्छासमवधानस्य कार्यो[1]त्पादाधीनतयाऽन्योन्याश्रयप्रसङ्गात् ।

अथ स्ववृत्तिप्रत्यक्षसजातीयविषयकत्वसम्बन्धेन कृतिविशिष्टत्वमिच्छायां निवेशनीयं, साजात्यञ्च स्ववृत्तिप्रत्यक्षनिष्ठभेदप्रतियोगितावच्छेदकधर्मेण[2], एतादृशसम्बन्धेन कृतिविशिष्टेच्छासमवधानञ्च न कार्यो[3]त्पादाधीनं तदव्यवहितोत्तरक्षणे तदनुत्पत्तावपि अन्ततो निर्धर्मितावच्छेद[4]ककचाक्षुषाद्युत्पत्त्यैव[5] चाक्षुषेच्छादीनां निरुक्तसम्बन्धेन कृतिविशिष्टत्वसम्भवात्, किन्तु चाक्षुषादिसामान्योत्पादाधीनं, तच्च न तादृशकृतिविशिष्टेच्छासमवधानाधीनमिति नान्योन्यश्रय प्रसङ्गः । न चैवं यत्र तदभावव्याप्यवत्तानिर्णयकाले घटादिस्पार्शनं तदनन्तरं पर्वतो वह्निमानित्येतादृशचाक्षुषापत्तिः, तादृशेच्छायां स्वोत्पत्तिक्षणोत्पन्नकृतिवृत्ति स्वपूर्वोत्पन्नस्पार्शनसजातीयविषयकत्वेन निरुक्तसम्बन्धेन कृतिविशिष्टत्वादिति वाच्यं, स्ववृत्तित्वस्येव स्ववृत्तिप्रागभावप्रतियोगित्वस्यापि प्रत्यक्षांशे[6] निवेशनीयतया तादृशघटादिस्पार्शनस्य च तादृशकृतिवृत्तिप्रागभावप्रतियोगित्वविरहेणानुपपत्त्यभावात् । अथ वा स्ववृत्तिप्रत्यक्षवत्त्वमेव कृतेः सम्बन्धः, प्रत्यक्षवत्त्वञ्च स्वजातीयविषयकत्वस्वपूर्वत्वोभयसम्बन्धेन, तादृशेच्छायां च तथाविधकृतिवृत्तिस्वजातीयविषयकत्व[7]सत्त्वेऽपि प्रत्यक्षपूर्वत्वाभावान्न[8] तादृशोभयसम्बन्धेन तादृशकृतिवृत्तिप्रत्यक्षवत्त्वम् ।

न चैवं पुरुषान्तरीयस्पार्शनसामग्रीसमवधानकालीनान्यदीयस्पार्शनेच्छाकालेऽतिप्रसङ्गो दुर्वार एवेति वाच्यं, स्वजातीयविषयकत्वस्वपूर्वत्वस्वसामानाधिकरण्यैतत्त्रि[9]तयसम्बन्धेनैव प्रत्यक्षवत्त्वनिवेशात् । स्वजातीयविषयकत्वञ्च वह्निप्रकारकत्वादिप्रकारतानिरूपितस्वजातीयनिष्ठविशेष्यताकत्वमतो घटादिचाक्षुषं पर्वते वह्निस्पार्शनञ्च जायतामित्याकारकेच्छानन्तरं घटादिचाक्षु[10]षोत्पत्तिक्षणे न पर्वतो वह्निमानित्याकारकचाक्षुषापत्तिः । तादृशेच्छायाः स्वसमानकालीनकृतिवृत्तिस्वानन्तरोत्पन्नघटादिचाक्षुषविषयकत्वेऽपि वह्निप्रकारकत्वप्रकारतानिरूपिततादृशचाक्षुषसजातीयनिष्ठविशेष्यताकत्वाभावेन तद्घटितत्रि-

---

१ र्यात्। यद्यधीन मा। २ धर्मिण मा। ३ र्यात् पादा० मा। ४ दक० मा०। ५ त्त्यैव मा। ६ त्त्यंशो मा। ७ सत्त्वे० मा। ८ स्व० मा०। ९ त्रित मा। १० ष्युत्पत्त्य० मा।

तयसम्बन्धेन तादृशकृतिवृत्तिप्रत्यक्षवत्त्वाभावात् । यत्तु एतादृशरीत्या एकप्रतिवध्यप्रतिबन्धकभावकल्पनेऽप्युभयव्याप्यवत्तानिर्णयकाले पर्वते वह्निचाक्षुषं वह्न्यभावचाक्षुषं च जायतामित्याकारकेच्छायां सत्यां यत्किञ्चिद्विषयकचाक्षुषादावु[१]त्पत्त्यभावे पर्वतो वह्निमान्न वेति संशयानुमित्यापत्तिः, तादृशेच्छाया उपदर्शितसम्बन्धेन कृतिविशिष्टतया तादृशेच्छाविरहविशिष्टतदभावव्याप्यवत्तानिर्णयाभावसत्त्वात् । न च तत्रेच्छाविशिष्टचाक्षुषसामग्रीरूपप्रतिबन्धकसत्त्वान्नानुमित्यापत्तिरिति वाच्यम्, तादृशेच्छाविषयीभूतचाक्षुषसामग्र्यामसत्यां तदापत्तिसम्भवादिति । तन्न, तादृशस्थले रत्नकोषकृतेव मयापि चाक्षुषानु[२]पगमात्, तादृशेच्छाया उपदर्शितसम्बन्धेन कृतिविशिष्टत्वाभावात् । न च भवन्मते चाक्षुषाद्युत्पत्तौ बाधकाभाव इति वाच्यं, रत्नकोषकृतेव मयापि प्रत्यक्षं प्रति तदभावव्याप्यवत्तानिर्णयाभावघटिताया एवानुमितिसामग्र्याः प्रतिबन्धकत्वकल्पनात्, तादृशसामग्रीरूपप्रतिबन्धकसमवधानस्यैव बाधकत्वादिति चेन्न, उपदर्शितसम्बन्धेन कृतिविशिष्टेच्छाया उत्तेजकत्वेऽपि अन्योन्याश्रयस्य दुर्वारत्वात् । तथा हि यत्र पर्वते वह्न्यभावव्याप्यवत्तानिर्णयः पर्वतत्वावच्छिन्नविशेष्यताकवह्निचाक्षुषं जायतामित्येतादृशेच्छा घटाद्यनु[३]मितिसामग्री च तत्र चाक्षुषसामान्योत्पादोऽपि तादृशविशिष्टेच्छासमवधानाधीनः । यतस्तस्याम[४]सत्यां तदभावव्याप्यवत्तानिर्णयरूपप्रतिबन्धकसत्त्वेन पर्वतत्वावच्छिन्नविशेष्यकवह्निचाक्षुषस्य भिन्नविषयकानुमितिसामग्रीरूपप्रतिबन्धकसत्त्वादन्यविषयकचाक्षुषस्य चो[५]त्पादासम्भवात्, किमपि चाक्षुषं च नोत्पद्यते । तादृशविशिष्टेच्छासमवधानञ्च चाक्षुषसामान्योत्पादाधीनमित्यन्योन्याश्रयः । तस्माद् विशिष्य[६] प्रतिवध्यप्रतिबन्धकभावकल्पनमावश्यकम् ।

अथ स्यादेवमिच्छाया उत्तेजकत्वोपगमे, तदेव न, किन्तु आहार्यज्ञाने व्यभिचारवारणाय कार्यतावच्छे[७]दककोटावनाहार्यत्वं निवेश्यं, तच्च जन्यतासम्बन्धेनेच्छावदन्यत्वम् । न चाहार्यज्ञाने इच्छाया हेतुत्वे मानाभाव इति वाच्यम्, एतदनुरो[८]धेनैव तत्कल्पनात्, अन्यथा इच्छाया उत्तेजकत्वे प्रतिबन्धकतावच्छेदककोटिप्रविष्टनानाविधाऽप्रामाण्यज्ञानाभावादिभिः[९] समं तदभावानां मिथो विशेषणविशेष्यभावे विनिगमनाविरहेण प्रतिवध्यप्रतिबन्धकभावानन्त्य[१०]प्रसङ्गादिति चेत् ? आहार्यज्ञानेच्छायाः केन रूपेण कार्यकारणभावः, न तावदाहार्यवह्निविशिष्टज्ञानत्वेन कार्यता वह्निप्रकारकप्रत्यक्षगोचरेच्छात्वेन कारणता इति,

१ कृतेरमया मा। २ न्युप मा। ३ न्नमि० मा। ४ समर्त्या मा। ५ चेतिपादा मा। ६ ष्टया मा। ७ दक विनाहा मा। ८ बोधेनेव मा। ९ ति समं० मा। १० न्य० मा।

आहार्यत्वस्येच्छाजन्यत्वरूपस्यात्माश्रयेणे[१]च्छाजन्यतानवच्छेदकत्वादिति । नापि वह्निविशिष्टबुद्धिविरोधिग्रहकालीनवह्निविशिष्टबुद्धित्वेन कार्यता तादृशेच्छात्वेन कारणता, विरोधिग्रहशून्यकाले इच्छारूपकारणवलाद् विरोधिग्रहकालीन-वह्निविशिष्टग्रहत्वावच्छिन्नापत्तेः । विरोधिग्रहकालीनत्वस्य स्थूलकालमादाया-नाहार्यज्ञानसाधारण्या[२]च्च । क्षणनिवेशे विरोधिग्रहनाशसमयो[३]त्पत्तिकाहार्यज्ञान-साधारण्याभावात्, विरोधिज्ञानाव्यवहितोत्तरक्षणोत्पत्तिकत्वनिवेशे चाव्य[४]वधा-नादेः स्वत्वघटितत्वेनाननुगमात् । एतेन वह्निप्रकारकचाक्षुषादिगोचरेच्छाव्यवहितो-त्तरक्षणोत्पत्तिकचाक्षुषत्वाद्यवच्छिन्नं प्रति तादृशेच्छात्वादिना हेतुतापि निरस्ता । वस्तुतोऽनन्यथासिद्धत्वनियतोत्तरवर्तित्वरूपमहागुरुशरीरजन्यतासम्बन्धेनेच्छावद-न्यत्वनिवेशापे[५]क्षया इच्छाया उत्तेजकत्वकल्प एव साधीयानिति न किञ्चि देतत् । न च जन्यत्वमतिरिक्तं तदनुगमकं जन्यतात्वमपीति वाच्यम्, मानाभवात् ।

यत्तु स्वसामानाधिकरण्यस्वाव्यवहितोत्तरक्षणोत्पत्तिकत्वोभयसम्बन्धेन प्रत्यक्षेच्छाविशिष्टं यत्तदन्यत्वस्य जन्यतावच्छेदककोटिनिवेशान्नाहार्यप्रत्यक्षे व्यभिचारः । स्वाव्यवहितोत्तरक्षणोत्पत्तिकत्वञ्च स्ववृत्तिप्रागभावप्रतियोगित्वे सति स्ववृत्तिकृतिमत्त्वमतोनाननुगमः । अथैवं स्पार्शनादिगोचरेच्छाकालीन-चाक्षुषादेस्तदभावव्याप्यवत्तानिर्णयाप्रतिवध्यत्वप्रसङ्गाच्चा[६]क्षुषगोचरेच्छाविशिष्ट-चाक्षुषा[७]दीनां तद्घटकनिवेशे च तेषां मिथो विशेष्यविशेषणभावे विनिगमना-विरहेण प्रतिवध्यप्रतिबन्धकताकल्पन[८]बाहुल्यमवच्छेदकगौरवञ्चेति चेन्न, स्वसामानाधिकरण्यस्वाव्यवहितोत्तरत्वस्वविषयत्वैतत्त्रितयसम्बन्धेन प्रत्यक्षेच्छा-विशिष्टत्वस्य निवेशनीयतया स्पार्शनादिगोचरेच्छाकालीनचाक्षुषादेः स्पार्शन-गोचरेच्छाविषयत्वाभावेन विषयत्वघटितोपदर्शितत्रितयसम्बन्धेन प्रत्यक्षेच्छा-विशिष्टत्वाभावात् । विषयत्वञ्च वह्निप्रकारकत्वप्रकारतानिरूपितविशेष्यत्व-रूपं ग्राह्यम्, तेन पर्वते वह्निस्पार्शनं घटचाक्षुषं च जायतामित्येतादृशेच्छा-कालीनस्य पर्वतो वह्निमान् घटवां[९]श्चेति चाक्षुषस्य न वह्न्य[१०]भावव्याप्यवत्ता-निर्णयाप्रतिवध्यत्वप्रसङ्गः । न च तदभावव्याप्यवत्तानिर्णयदशायां विनैवेच्छा-मिच्छाविशिष्टज्ञानापत्तिः, इच्छाविशिष्टज्ञाने इच्छाया हेतुत्वोपगमात् । न च स्पार्शनादिगोचरेच्छाकाले चाक्षुषेच्छाविशिष्टचाक्षुषादेः चाक्षुषेच्छादिरूपकारण-विरहात् तादृशत्रितयसम्बन्धेनेच्छावदन्यचाक्षुषादेः तदभावव्याप्यवत्तानिर्णया-भावादिरूपकारणविरहाद् अन्यविधस्य चाली[११]कतयो[१२]त्पादनासम्भवात् । न

१ सेद्दोज० मा। २ न्याच्च मा। ३ योऽपपत्तिका मा। ४ व्यधना० मा। ५ शोत्पत्त० मा०। ६ चा० मा। ७ चात्तु चात्तुषादिति० मा। ८ कलातूल्यम० मा। ९ वांश्चे० मा। १० ल्यु मा। ११ नीक० मा। १२ यापा० मा।

चैतन्मते इच्छायाः षट् कारणत्वानि तदभावव्याप्यवत्तानिर्णयाभावस्य चैकमिति सप्तकार्यकारणभावक[1]ल्पनापेक्षया चाक्षुषेच्छाविरहविशिष्टतदभावव्याप्यवत्तानिर्णयाभा[2]वत्वादिना षट्कार्यकारणताकल्पनमुचितमिति वाच्यम्, इच्छाया उत्तेजकत्वेऽप्रामाण्यग्रहाभावादिभिः[3] सममिच्छाऽभावादीनां मिथो विशेषणविशेष्यभावे विनिगमनाविरहेण प्रतिवध्यप्रतिबन्धकभावबाहु[4]ल्यात्, इच्छाया उत्तेजकत्वकल्पे वाधादिप्रतिबन्धकतायामपि इच्छाया उत्तेजकत्वात् तदनु[5]पगमेन लाघवाच्च, तत्रापि जन्यतावच्छेदककोटौ तादृशसम्बन्धेन इच्छावदन्यत्वनिवेशेनैवोपपत्तेः। एतेनेच्छाकालेऽपि तदभावव्याप्यवत्तानिर्णयाभावरूपकारणबलाद् इच्छाविशिष्टान्यज्ञानत्वावच्छिन्नापत्तिवारणाय चाक्षुषेच्छाविशिष्टान्यचाक्षुषत्वावच्छिन्नं प्रति चाक्षुषेच्छाऽभावत्वादिना हेतुत्वकल्पने च गौरवमित्यपि परास्तम् एतादृशकार्यकारणभावकल्पकमते बाधादिप्रतिबन्धकतायामिच्छाया उत्तेजकत्वानभ्युपगमे लाघवादिति। तदसत्। वह्निप्रकारकत्वप्रकारतानिरूपितविशेष्यताघटितत्रितयसम्बन्धेन इच्छावदन्यत्वस्य कार्यतावच्छेदककोटिनिवेशे पर्वतविशेष्यकवह्निभिन्नप्रकारकचाक्षुषादिसामग्र्यसमवहिते पर्वते यत्किञ्चित्प्रकारकचाक्षुषं जायतामित्येता[6]दृशेच्छाधीने पर्वतधर्मिकवह्निचाक्षुषादौ व्यभिचारप्रसङ्गात्। तत्तद्व्यक्तित्वेन तादृशेच्छामुपादाय तत्तदिच्छाविशिष्टान्यत्वस्यापि जन्यतावच्छेदककुक्षौ निवेशने तथाविधचाक्षुषस्पार्शनादिगोचरेच्छाविशिष्टचाक्षुषस्पार्शनादिव्यक्तिभेदानामेकत्र निवेशितानां मिथो विशेषणविशेष्यभावे विनिगमनाविरहप्रसङ्गात्। तस्मादिच्छाया उत्तेजकत्वकल्प एव साधीयानिति। सयत्तु[7] मुच्चये व्यभिचारवारणाय विरोधविषयकत्वं तदभावव्याप्यवत्तानिर्णयाभावादिजन्यतावच्छेदकं वाच्यं, तथा चाहार्यज्ञाने विरोध[8]भानानुपगमेनैव तत्र व्यभिचारवारणसम्भवे गतमिच्छाया उत्तेजकत्वेनेति। न च विरोधविषयतायाः तदभावव्याप्यवत्तानिर्णयादिप्रतिवध्यतावच्छेदककुक्षिनिवेशे विरोधाविषयकस्य पर्वतो वह्निमानित्याकारकज्ञानस्य तदभावव्याप्यवत्तानिर्णया[9]दिदशायामापत्तिरिति वाच्यम्, आहार्यसमुच्चयातिरिक्तनिखिलज्ञानेष्वेव विरोधस्य कोट्यधिकबलयोः संसर्गघटकतया भानोपगमाद् आहार्यसमुच्चयातिरिक्तविरोधाविषयकज्ञानस्यालो[10]कतया आहार्यज्ञानस्य इच्छारूपकारणविरहेण समुच्चयस्य चाव्याप्यवृत्तित्वज्ञानरूपकारणविरहेणापादनासंभवात्। आहार्यज्ञाने इच्छाया हेतुत्वस्याधिकस्य

---

१ वच्छेदत्पच्चया मा। २ तावत्वा० मा। ३ तिः मा। ४ वातूल्या० मा ५ न्युप० मा। ६ त्वेता० मा। ७ तु मा। ८ तनान्युपगमे० मा। ९ यां श्रा मा। १० नीक० मा।

कल्पनेऽपि उत्तेजक[१]त्वकल्पनापेक्षया लाघवस्य प्रागेव दर्शितत्वात् । एवञ्च कथमुभयव्याप्यवत्तानिर्णयकालेऽनुमितिरिति । तदत्यन्तमसत्, आहार्यज्ञाने विरोधविषयतानभ्युपगमे आहार्यसंश[२]यानुदयप्रसङ्गात् विरोधविषयकज्ञानस्यैव संशयत्वात् विरोधस्य संसर्गघटकत्वे मानाभावात् । विरोधविषयतायाः तदभावव्याप्यवत्तानिर्णयादिप्रतिवध्यतावच्छेदकत्वा[३]योगाच्च । आहार्यसमुच्चयातिरिक्तायां निखिलाविरुद्धसंयोगतदभावादिविशिष्टबुद्धौ विरोधभानोपगमे तासां भ्रमत्वप्रसङ्गात् । तत्स्थलीयप्रतिवध्यप्रतिबन्धकभावे तादृशरीतेर[४]त्यन्तासम्भवदुक्तिकत्वाच्च । विरोधविषयतायाः प्रतिवध्यतावच्छेदककुक्षावनिवेशे समुच्चये व्यभिचारः कथं वारणीय इति चेत्, इच्छावदव्याप्यवृत्तित्वज्ञानस्याप्युत्तेजकत्वमनुसृत्येति[५] गृहाण। केचित्तु [६]विशेष्ये विशेषणमिति रीत्या वह्न्यादिविशिष्टबुद्धित्वमेव तदभावव्याप्यवत्तानिश्चयादिप्रतिवध्य तावच्छेदकं, तदभावव्याप्यवत्तानिर्णयदशायामिच्छासत्त्वे च विशिष्टवैशिष्ट्यबोधात्मकं प्रत्यक्षं जायत इत्य[८]लमिच्छाया उत्तेजकत्वेन । न च विशिष्टवैशिष्ट्य[९] बोधत्वमेव तत्प्रतिवध्यतावच्छेदकम् इच्छाकाले च विशेष्ये विशेषणमिति रीत्यैव वह्न्यादिविशिष्टबुद्धिः कल्प्यत[१०] इत्यपि किं न स्यादिति वाच्यम्, विशिष्टवैशिष्ट्यबुद्धित्वस्य तथात्वे वह्न्यादिनिर्विकल्पोत्तरोत्प[११]न्नाया वह्निमानित्यादिबुद्धेः[१२]प्रतिवध्यतावच्छेदकानाक्रान्तत्वप्रसङ्गेन तदभावव्याप्यवत्तानिर्णयदशायां विनैवेच्छां तादृशविशिष्टबुद्धिप्रसङ्गात् । अथ विशेष्ये विशेषणमिति रीत्या विशिष्टबुद्धित्वं [१३]पर्वतांशे वह्निप्रकारकत्वे सति तदंशे वह्नित्वप्रकारकत्वं, तच्च पर्वतो वह्निमानित्याद्यविसकलबोधसाधारणमेवेति कथं तादृशधर्मस्य प्रतिवध्यतावच्छेदकत्वमनुपगम्य तदभावव्याप्यवत्तानिर्णयदशायामिच्छाधीनं तादृशबोधमुपपादय[१४]सीति चेत्, वह्नित्वप्रकारतानिरूपितविशेष्यत्वाभिन्नपर्वतत्वावच्छिन्नविशेष्यतानिरूपितप्रकारताशालिबुद्धित्वमेव प्रतिवध्यतावच्छेदकं, न तूक्तधर्मः, आहार्यज्ञाने च वह्नित्वावच्छिन्ना पर्वतविशेष्यतानिरूपितप्रकारतैव[१५] स्वीक्रियते न तूपदर्शितविलक्षणप्रकारताऽतो न व्यभिचारः । अनाहार्यविशिष्टवैशिष्ट्यबोधे च द्विविधविषयतैव स्वीक्रियतेऽतो न तदसंग्रहः । न चैवं वह्नित्वावच्छिन्नप्रकारताया अपि वह्नित्वप्रकारतानिरूपितविशेष्यत्वाभिन्नतया तथाविधायाः पर्वतत्वावच्छिन्नविशेष्यतानिरूपितप्रकारताया अपि पर्वतो वह्निमानित्येतादृशनिखिलज्ञान-

---

१ नुक० मा । २ संस्यो स्वदय० मा । ३ त्वयो० मा । ४ न्यन्ता० मा० । ५ त्येति मा । ६ त्तु मा । ७ ध्यबच्छे० मा । ८ त्यनामिकाया मा । ९ ष्ट० मा । १० ल्पय मा । ११ त्पन्नयो मा । १२ द्धिः मा । १३ पर्तांशो मा । १४ यमी० मा । १५ र मा ।

साधारण्यमिति वाच्यं, तद्धर्मावच्छिन्नप्रकारतायाः तद्धर्मप्रकारतानिरूपितविशेष्यतात्वे प्रमाणविरहात्। न चैवमाहार्यस्य पर्वतो वह्निमानित्येतादृशज्ञानस्य वह्नित्वप्रकारतानिरूपितविशेष्यताशालित्वानुपपत्तिरिति वाच्यं, तत्र पर्वत-विशेष्यतानिरूपितप्रका[1]रतात्मकविषयतायां वह्नित्वप्रकारतानिरूपितविशेष्यतात्वविरहेऽपि वह्निरित्याकारकज्ञानीयवह्नित्वप्रकारतानिरूपितविशेष्यतायाः तत्साधारण्योपगमेनैव तस्य तथात्वोपपत्तेः।

अथ भिन्नविषयकानुमितिसामग्र्यादिसमवधानकालीनस्य विशिष्टवैशिष्ट्यबोधत्वप्रकारकेच्छाधीनस्य पर्वतो वह्निमानित्यादिविशिष्टवैशिष्ट्यबोधस्य वह्निरित्याकारकज्ञानीयवह्नित्वप्रकारतानिरूपितविशेष्यताशालित्वं न सम्भवति वह्नित्वप्रकारतानिरूपितमुख्यविशेष्यताशालिप्रत्यक्षत्वावच्छिन्नं प्रति वह्निप्रत्यक्षं जायतामित्येतादृशेच्छाविरहविशिष्टभिन्नविषयकानुमितिसामग्र्याः प्रतिबन्धकत्वात्। विशिष्टवैशिष्ट्यबोधत्वप्रकारकेच्छाया अपि तत्रोत्तेजकत्वे तथाविधसामग्रीदशायां तादृशेच्छासत्त्वे विशेषणतावच्छेदकप्रकारकज्ञानासत्त्वे वह्निरित्याकारकप्रत्यक्षापत्त्या तादृशेच्छायाः तत्रोत्तेजकत्वासम्भवात्, अतस्तथा[2]विधाहार्यविशिष्टवैशिष्ट्यबोधस्यवह्नित्वप्रकारतानिरूपितविशेष्यताशालित्वोपपत्तये वह्नित्वावच्छिन्नप्रकारताया एव वह्नित्वप्रकारतानिरूपितविशेष्यतात्वं स्वीकरणीयम्। तथा च वह्निमान् पर्वत इत्याकारकनिखिलज्ञानानामेव वह्नित्वप्रकारतानिरूपितविशेष्यत्वाभिन्नपर्वतविशेष्यतानिरूपितप्रकारताशा[3]लित्वमस्तीति चेन्मन्यसे तदा वह्नित्वानवच्छिन्नवह्नित्वप्रकारतानिरूपितविशेष्यत्वाभिन्नपर्वतविशेष्यतानिरूपितप्रकारतैव प्रतिबध्यतावच्छेदककोटौ[4] निवेशनीया। अत्र च वह्नित्वावच्छिन्नवह्नित्वप्रकारतानिरूपितविशेष्यत्वाभिन्नतादृशप्रकारतेति। अतो न काप्यनुपपत्तिः।

अथैतादृशविषयतायाः प्रतिबध्यतावच्छेदकत्वेऽनाहार्यस्यापि विशिष्टवैशिष्ट्यबोधस्य तदप्रतिबध्यत्वप्रसङ्गः, वह्नित्वानवच्छिन्नवह्नित्वप्रकारतानिरूपितविशेष्यत्वाभिन्नप्रकारताशालिबोधे वह्नित्वप्रकारकज्ञानस्य प्रतिबन्धकत्वकल्पनात् विशिष्टवैशिष्ट्यबोधस्य तादृशप्रकारताशालित्वासंभवात्। तादृशप्रतिबध्यप्रतिबन्धकभावकल्पनं निष्प्रयोजनकमिति नाशङ्कनीयं, तत्कल्पन एव वह्नित्वप्रकारकज्ञाननियतानां विरोधिसामग्रीणां विशेष्ये विशेषणमिति रीत्या तादृशबोधं[5] प्रति प्रतिबन्धकत्वाकल्पनेन लाघवात्। न च तादृशविरोधिसामग्रीकाले वह्नित्वविशिष्टवैशिष्ट्यबोधवारणाय तत्र तत्प्रतिबन्धकत्वे

१ ता विषयतामा० मा। २ विहा० मा। ३ ली० मा। ४ ट्यौ० मा। ५ धः० मा।

कल्पनीये उभयसाधारणं वह्नित्वप्रकारतानिरूपितविशेष्यत्वाभिन्नपर्वतत्वावच्छिन्नविशेष्यतानिरूपितप्रकारताशालित्वमेव प्रतिवध्यतावच्छेदकमुपेयते, तथा च तादृशप्रतिबन्धकतयैवोपपत्तौ विशेष्ये विशेषणमिति रीत्या बोधे तादृशसामग्रीणां पृथक् प्रतिबन्धकत्वकल्पनप्रसक्तिरेव नास्तीति वाच्यं, विशिष्टवैशिष्ट्यबोधो जायतां विशेष्ये विशेषणमिति रीत्या बोधो जायतामित्येतादृशेच्छानां पृथक् पृथगुत्तेजकत्वानुरो[१]धेन पृथक् प्रतिबन्धकताकल्पनस्यावश्यकत्वादिति चेत्, तर्हि विशिष्टवैशिष्ट्यबोधत्वस्यैव तदभावव्याप्यवत्ताज्ञानादिप्रतिवध्यतावच्छेदकत्वमुपेयते, आहार्यज्ञानं तु विशेष्ये विशेषणमिति रीत्यैव जायते, तदभावव्याप्यवत्ताज्ञानदशायां तन्निर्विकल्पकोत्तरं यादृशसामग्रीबलाद् वह्निमान् पर्वत इत्याकारकप्रत्यक्षं जायते तादृशसामग्रीबलात् तथाविधप्रत्यक्षापत्तिः संभवति। वह्नित्वप्रकारकज्ञानाभावस्यापि तत्सामग्रीघटकत्वात्। वह्न्यभावव्याप्यवत्ताज्ञानदशायां च नियम[२]तस्तादृशज्ञानसत्त्वेन तथाविधसामग्र्या एवाभावात्। वस्तुतस्तु वह्नित्वप्रकारकज्ञाननियतविरोधिसामग्र्या उभयसाधारणोपदर्शितधर्मं प्रतिवध्यतावच्छेदकीकृत्य एकप्रतिबन्धकत्वमेव शक्यते कल्पयितुं, विशिष्टवैशिष्ट्यबोधो जायतां विशेष्ये विशेषणमिति रीत्या बोधो जायतामित्याकारकेच्छयोरेकत्रोत्तेजकत्वे क्षतिविरहात्। न हि तयोरेकत्रोत्तेजकत्वे तादृशसामग्रीदशायां विशिष्टवैशिष्ट्यबोधत्वप्रकारकेच्छासत्त्वे विशेषणतावच्छेदकप्रकारकज्ञानासत्त्वे विशेष्ये विशेषणमितिरीत्या तादृशप्रत्यक्षस्यापत्तिः संभवति, वह्नित्वप्रकारकज्ञाननियतविरोधिसामग्रीदशायां विशेषणतावच्छेदकप्रकारकज्ञानस्यावश्यकत्वात्। न चापत्तिविरहेऽपि एतादृशेच्छयोरेकत्रोत्तेजकत्वे एकत्रोभयेच्छाऽभावयोर्निवेशात् तयोर्मिथो विशेष्यविशेषणभावे विनिगमनाविरह इति वाच्यम्, तादृशेच्छयोर्वह्नित्वप्रकारतानिरूपितविशेष्यत्वाभिन्नतादृशप्रकारत्वशालिबोधत्वप्रकारकेच्छात्वेनानुगमय्योत्तेजकत्वोपगमादभाव[३]द्वयस्यैवानिवेशात्। तथा च विशेष्ये विशेषणमिति रीत्या बोधे विशेषणतावच्छेदकप्रकारकज्ञानप्रतिबन्धकतायाः प्रयोजनविरहेणाकल्पनात्। वह्नित्वानवच्छिन्नाया वह्नित्वप्रकारतानिरूपितविशेष्यत्वाभिन्नप्रकारताया अनाहार्यविशिष्टवैशिष्ट्य[४]बोधसाधारण्ये बाधकाभावात्। तादृशविषयतायाः प्रतिवध्यतावच्छेदकत्वेऽपि न क्षतिः।

अथ विशेष्ये विशेषणमिति रीत्या तद्विशिष्टबुद्धित्वस्य तदभावव्याप्यवत्तानिर्णयादिप्रतिवध्यतावच्छेदकत्वोपगमे तदभावव्याप्यवत्तानिर्णयदशायामिच्छा-

१ वो० मा। २ मस्ता० मा। ३ स्य० मा। ४ ष्ट० मा।

सत्त्वे [1]इव तदसत्त्वेऽपि विशिष्टवैशिष्ट्यावगाहिप्रत्यक्षापत्तिः। न च विशिष्टवैशिष्ट्यबोधे इच्छाया हेतुत्वोपगमे [2]नापत्तिरिति वाच्यम्, इच्छां विनापि तदभावव्याप्यवत्ताज्ञानादिशून्यकाले विशिष्टवैशिष्ट्यबोधोदयेन इच्छाया हेतुत्वस्यैव कल्पयितुमशक्यत्वादिति चेन्न, वह्नित्वानवच्छिन्नप्रकारताशून्यवह्नित्वावच्छिन्नप्रकारताशालिचाक्षुषत्वावच्छिन्नं प्रति वह्नित्वावच्छिन्न प्रकारकचाक्षुषगोचरेच्छात्वादिना हेतुता कल्प्यते, तदभावव्याप्यवत्तानिर्णयादिशून्यकालीनवह्नित्वविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षस्य द्विविधविषयताशालित्वेन वह्नित्वानवच्छिन्नप्रकारताशून्यत्वाभावान्न व्यभिचारः। इत्थञ्च तदभावव्याप्यवत्तानिर्णयादिकालेऽसत्यामिच्छायां तादृशप्रकारताशून्यतथाविधबोधस्य इच्छारूपकारणविरहात् तादृशप्रकारताशालितथाविधबोधस्य तदभावव्याप्यवत्तानिर्णयाभावादिरूपकारणविरहात्, अन्यविधतथाविधबोधस्य चालीकतयाऽऽपादनासंभवात्। स्यादेतत्, एवमप्युभयव्याप्यवत्ताज्ञानदशायां विशिष्टवैशिष्ट्यावगाहिन्यां संशयानुमितौ न किञ्चिद्बाधकमीक्षा[3]महे।

अथ वह्नित्वानवच्छिन्नवह्न्यादिप्रकारताशालिन्या विशिष्टवैशिष्ट्यबोधात्मिकाया अनुमितेस्तदभावव्याप्यवत्तानिर्णयादिप्रतिबध्यतया वह्नित्वानवच्छिन्नप्रकारताशून्यवह्नित्वावच्छिन्नप्रकारताशालिबुद्धेरिच्छारूपकारणविरहेण अन्यादृश्याश्चा[4]लीकतया नापत्तिरिति चेन्न, अभिप्रायं नावगतवानसि[5], यतो न वयं संशयानुमितिमापादयामः। किन्तूभयव्याप्यवत्तानिर्णयकाले शुद्धवह्नित्वादिविशिष्टप्रकारकसंशयानुमितिमस्वी[6]कुर्वतां मते बाधकं पृच्छामः। न च साधकाभाव एव बाधक इति वाच्यं, प्रत्येकमुभयकोट्यनुमितिसामग्र्या एव तत्साधकत्वात्, अनुमितिप्रयोजकीभूतपरामर्शघटितसामग्रीव्याप्तौ प्रयोजनविरहेण तदभावव्याप्यवत्तानिर्णयाभावस्यानिवेशेन तत्प्रयोजकीभूतसामग्र्या उभयव्याप्यवत्ताज्ञानकालेऽक्षतत्वात्। न च तदभावव्याप्यवत्ताज्ञानाभावस्य सामग्रीव्याप्ताव[7] निवेशेऽन्व[8]यव्यभिचारसन्देहे उभयव्याप्यवत्ताज्ञानदशायामनुमितेः सन्दिग्ध[9]त्वादिति तन्निवेशनमावश्यकमिति वाच्यम्, अन्वयव्यभिचारसन्देहस्यादोषत्वात्। न [10]चैवम् उभयव्याप्यवत्ताज्ञानकाले केवलविशिष्टवैशिष्ट्यविषयताशालिसंशयानुमितेरुपगमे बाधकालेऽपि तादृशानुमित्यापत्तिः। आहार्यप्रत्यक्षे व्यभिचारवारणाय बाधबुद्धिप्रतिबध्यतावच्छेदककोटावपि वह्नित्वानवच्छिन्न-

---

१ मा० मा। २ त्वो० मा। ३ मा० मा। ४ ज्ञानीं० मा। ५ मि० मा। ६ चोदुग्रवं मा। ७ स्यवि० मा। ८ नु० मा। ९ कृ० मा। १० सै० मा।

प्रकारताया एव निवेशनीयतया तादृशानुमितेस्तदप्रतिवध्यत्वादिति तादृशानुमितौ बाधबुद्धिप्रतिबन्धकत्वान्तरं संशयानुमितिं स्वीकुर्वतोपगन्तव्यमिति तदनभ्युपगम एव समीचीनः, यतो[1] विरोधिसामग्रीकालीनविशिष्टवैशिष्ट्यबोधत्वप्रकारकेच्छाधीनानुमितौ वह्नित्वाद्यनवच्छिन्नप्रकारताशालित्वं न सम्भवति, तादृशप्रकारताशालिन्यामनुमितौ विशेष्ये बिशेषणमिति रीत्याऽनुमितिर्जायतामित्येतादृशेच्छाविरहविशिष्टविरोधिसामग्र्याः प्रतिबन्धकत्वात्, प्रकृते च तादृशप्रतिबन्धकसत्त्वात् । एवञ्च उभयव्याप्यवत्ताज्ञानकाले तथाविधप्रकारताशून्यसंशयानुमितिरुपपद्यते, बाधप्रतिवन्धकता तु तथाविधानुमितौ नैवेति[2] । तदसत् । विशेष्ये विशेषणमिति रीत्याऽनुमितौ तथाविधानुमित्सा[3] मुत्तेजकीकृत्यैव विरोधिसामग्र्या प्रतिबन्धकत्वात् । विशिष्टवैशिष्ट्यबोधत्वप्रकारकेच्छाधीनानुमिते[4]रपि तथाविधप्रकारताशालित्वसंभवात् । उभयेच्छयोरेकत्रोत्तेजकत्वे विशिष्टवैशिष्ट्यबोधत्वप्रकारकेच्छाकाले विशेषणतावच्छेदकप्रकारकज्ञानासत्त्वे केवलं विशेष्ये विशेषणमितिप्रसङ्ग इति तु न सम्भवदुक्तिकं, पर्वतो वह्निमानित्याकारकानुमितिसामग्रीकाले वह्नित्वादिविशिष्टवैशिष्ट्यबोधजनकीभूतविशेषणतावच्छेदकप्रकारकज्ञानस्य वियमतः सत्त्वात् । प्रागुपदर्शितेनानुगतरूपेण द्वयोरुत्तेजकत्वोपगमान्नाभाव[5]द्वयस्य विशेष्यविशेषणभावे विनिगमनाविरहेण प्रतिबन्धकताद्वयमाशङ्क्य[6]तव्यमित्याहुः ।

अत्रेदं चिन्त्यम् । पर्वतो वह्निमानित्याकारकानुमित्यादिकं प्रति वह्नित्वादिप्रकारकज्ञाननियतानामिच्छाविशिष्टवह्निमन्महानसमित्याकारकशाब्दबोधादिसामग्रीणां प्रतिबन्धकतायामपि इच्छाया उत्तेजकत्वं नोपेयते । किन्तु वह्नित्वानवच्छिन्नप्रकारतैव तत्प्रतिवध्यतावच्छेदककोटौ निवेश्यते, इच्छाकाले च केवलविशिष्टवैशिष्टयबोधात्मकानुमित्यादेरुपगमेन न तत्र व्यभिचारः । इत्थं च तत्रैव वह्नित्वाद्यनवच्छिन्नवह्न्यादिप्रकारताशून्यायाः पर्वतो वह्निमानित्याद्यनु[7]मितेः तदभावव्याप्यवत्ताज्ञानप्रतिवध्यतावच्छेदकानाक्रान्तायाः प्रसिद्ध्या उभयव्याप्यवत्ताज्ञानकाले तथाविधवह्न्यादिप्रकारताशून्यसंशयानुमितौ न किञ्चिद् बाधकम् । न च तादृशानुमितौ इच्छाया हेतुत्वात् तदभावादेव संशयानुमितिर्न भवतीति वाच्यम्, एवमपीच्छाकाले तस्या दुर्वारत्वात् । न च तत्र वह्नित्वादिविशिष्टवैशिष्ट्यबोधीयप्रकारतैव प्रतिवध्यतावच्छेदककोटौ निवेश्यते, एवं च इच्छाकाले तादृशप्रकारताशून्यवह्नित्वाद्यनवच्छिन्नवह्न्यादि-

१ येऽ० मा । २ त्न्येति० मा । ३ त्वसात्वाय० मा । ४ ति० मा । ५ त्व० मा । ६ सि० मा । ७ त्वा० मा ।

प्रकारताकानुमिति[१]र्याऽऽपद्यते सा च तदभावव्याप्यवत्तानिर्णयादिप्रतिवध्यैवेति वाच्यम्, विशिष्टवैशिष्ट्यबोधविषयताया एतादृशसामग्रीप्रतिबध्यतावच्छेदकत्वे तादृशसामग्रीकाले विशेष्ये विशेषणमिति रीत्या पर्वतो वह्निमानिति प्रत्यक्षवारणाय तत्र पृथक् प्रतिबन्धकताकल्पनापत्तेः। मन्मते तु तादृशप्रतिवध्यतावच्छेदकत्वोपगमेनैकप्रतिबन्धकतयैवोपपत्तेः। न च भवन्मते शुद्धविशिष्टवैशिष्ट्यविषयताशालिन्या बाधबुद्धेः प्रतिवध्याया अप्यनु[२]मितेः प्रसिद्ध्या बाधकाले तदापत्तिरिति वाच्यं, विशिष्टवैशिष्ट्यविषयतां प्रतिवध्यतावच्छेदककोटौ निवेश्य अनुमित्यादिस्थले बाधबुद्धेः प्रतिबन्धकत्वान्तरस्य कल्पनीयत्वात्। सामग्रीप्रतिबन्धकतावृद्धिमपेक्ष्य बाधप्रतिबन्धकतावृ[३]द्धेरेवोचितत्वात्। अपि च तदभावव्याप्यवत्ताज्ञानादिप्रतिवध्यतावच्छेदकं यदि विशेष्ये विशेषणमिति रीत्या वह्न्यादिविशिष्टबुद्धित्वं तदा नित्य[४]साधारण्यवारणाय जन्यत्वमधिकं निवेश्यं, तथा च विनाशित्वस्य कालिकसम्बन्धेन घटत्वादिमत्त्वस्य वा निवेशमादाय विनिगमनाविरहेणानन्त्यप्रसङ्गः। तन्निवेशेनापि नित्यसाधारण्यस्य वारयितुं शक्यत्वात्, अतश्चाक्षुषत्वादीनामेव प्रतिवध्यतावच्छेदकत्वमुचितमिति संशयानुमितिर्निराबाधैव ॥

अथ लौकिकसन्निकर्षजन्यबुद्धौ व्यभिचारवारणाय प्रतिवध्यतावच्छेदककोटौ लौकिकविषयताशून्यत्वमवश्यं निवेश्यं, तस्य चेश्वर[५]ज्ञानेऽभावादेव तद्घटितप्रतिवध्यतावच्छेदकं नित्यसाधारणमिति चेत्। सत्यम्, वह्न्यादिविशिष्टबुद्धिस्थलीयप्रतिवध्यतावच्छेदकस्यैवं रीत्या नित्यव्यावृत्तत्वमुपपद्यते, तथाप्यतीन्द्रियगुरुत्वादिपदार्थविशिष्टबुद्धिस्थलीयप्रतिवध्यतावच्छेदके च लौकिकविषयताशून्यत्वस्य निवे[६]शयितुमशक्यतया तत्र कथं विशेषणान्तरमनिवेश्य तथात्वं वारयिष्य[७]सि? तथा च तत्र चाक्षुषत्वादीनामेव प्रतिवध्यतावच्छेदकत्वस्यावश्यतया तत्साध्यकसंशयानुमितिर्दुर्वारैवेति। एतेन तदभावव्याप्यादिमत्तानिर्णयकालीनेच्छाकालीनविशिष्टबुद्धौ तदभावव्याप्यादयोऽपि यथायथं तद्विशेष्यतावच्छेदकतया भासन्ते, एवञ्च वह्न्यभावव्याप्यवान् पर्वतो वह्निमानित्याकारकमेव सर्वत्राहार्यज्ञानम्। तथा चानुमित्यादिसाधारणतदभावव्याप्यवत्त्वरूपविशिष्टधर्मानवच्छिन्नपर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्न्यादिप्रकारताशालिज्ञानत्वादिकमेव पर्वतत्वावच्छिन्नविशेष्यकवह्न्यभावव्याप्यवत्तानिर्णयादिप्रतिवध्यतावच्छेदकमिति न संशयानुमितिप्रसङ्गः।

---

१ बोधात्० मा। २ त्व० मा। ३ द्धु० मा। ४ न्य० मा। ५ चेज्ञा० मा। ६ वेश्यकत मा। ७ ष्यामि मा।

न च वह्न्यभावव्याप्यवत्तानिर्णयादिकाले इच्छासत्त्वे इव तदसत्त्वेऽपि वह्न्यभावव्याप्यवान् पर्वतो वह्निमानित्यादिप्रत्यक्षापत्तिरिति वाच्यम्, वह्न्यभावव्याप्यवत्त्वविशिष्टधर्मावच्छिन्नविशेष्यताकचाक्षुषत्वाद्यवच्छिन्नं प्रति चाक्षुषेच्छात्वादिना हेतुत्वोपगमात् । न च वह्न्यभावव्याप्यवान् पर्वत इति निर्णयशून्यकाले पर्वते वह्निचाक्षुषंजायतामित्येतादृशेच्छाबलात् वह्न्यभावव्याप्यवान् पर्वतो वह्निमानित्येतादृशचाक्षुषप्रसङ्ग इति वाच्यं, वह्न्यभावव्याप्य विशिष्टपर्वतत्वावच्छिन्नविशेष्यकबोधे विशेष्यतावच्छेदकप्रकारकज्ञानविषया पर्वतत्वावच्छिन्नविशेष्यकवह्न्यभावव्याप्यवत्तानिर्णयादीनां हेतुतायाः क्लृप्तत्वात् तादृशनिर्णयशून्यकाले तथाविधप्रत्यक्षापत्त्यसंभवात् ।

अथ पर्वतो वह्न्यभावव्याप्यवानित्येतादृशनिर्णयदशायां पर्वते वह्निप्रत्यक्षं जायतामित्येतादृशेच्छासत्त्वे सत्यां च घटानुमितिसामग्र्[1]यां न वह्न्यभावव्याप्यवत्ता भासि[2]तुम[3]लमिति पर्वतत्वावच्छिन्नविशेष्यताकवह्न्यभावव्याप्यप्रकारकप्रत्यक्षं प्रति प्रतिपक्षो[4]भूतायाः तादृशप्रत्यक्षत्वप्रकारकेच्छाविरहविशिष्टभिन्नविषयकानुमितिसामग्र्याः सत्त्वादिति तत्र वह्न्यभावव्याप्त्यनवच्छिन्नविशेष्यताकेवा[5]ऽऽहार्यवह्न्यादिविशिष्टबुद्धिर्भविष्यतीति तत्र व्यभिचारवारणाय इच्छाया उत्तेजकत्वमावश्यकमित्यतश्चाक्षुषत्वादिकं तत्प्रतिवध्यतावच्छेदकं वक्तव्यमिति चेन्न । पर्वतत्वावच्छिन्नविशेष्यताकवह्न्यभावव्याप्यप्रकारकप्रत्यक्षं जायतामित्येतादृशेच्छाविरहविशिष्टविरोधिसामग्र्याः प्रतिवध्यतावच्छेदकं यदि पर्वतत्वाद्यवच्छिन्नविशेष्यताकवह्न्यभावव्याप्यप्रकारकप्रत्यक्षत्वं, तदा तादृशेच्छां विना वह्न्यभावव्याप्यवत्त्वविशिष्टपर्वतत्वावच्छिन्नविशेष्यताकघटादिप्रत्यक्षत्वप्रकारकेच्छाबलाद् विरोधिसामग्रीदशायां तथाविधप्रत्यक्षोत्पत्त्या तत्र व्यभिचारवारणाय वह्न्यभावव्याप्यातिरिक्तप्रकारत्वानिरूपितपर्वतत्वावच्छिन्नविशेष्यताशालिप्रत्यक्षत्वमेव तत्प्रतिवध्यतावच्छेदकं वाच्यम्, तथा च तादृशेच्छां विनापि वह्न्यभावव्याप्यवान् पर्वतो वह्निमानित्येतादृशप्रत्यक्षोत्पत्तौ न किञ्चिद् बाधकम् । न च वह्न्यभावव्याप्यवत्पर्वतत्वावाच्छिन्नविशेष्यताकवह्न्यादिप्रत्यक्षं प्रति वह्न्यभावव्याप्यप्रकारतानिरूपितपर्वतत्वावाच्छिन्नविशेष्यतानिरूपितवह्निप्रकारताशालिप्रत्यक्षत्वप्रकारकेच्छाविरहविशिष्टविरोधिसामग्र्याः प्रतिवन्धकत्वात् तादृशेच्छां विना कथं तथाविधप्रत्यक्षमुत्पद्यत इति वाच्यम्, तथाविधेच्छयोः पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्निप्रकारताशालिप्रत्यक्षं जायतामित्येतादृशेच्छासाधारणकल्पेनैवोत्तेजकत्वात् ।

१ ग्र्यं मा । २ षि० मा । ३ म इति मा । ४ क्षकी० मा । ५ रा० मा ।

तादृशेच्छां विनापि एतादृशेच्छाबलात् तथाविधप्रत्यक्षोत्पत्तौ बाधकाभावादिति न किञ्चिदनुपपन्नम् ।

अथैवमपि यत्र भावि—वह्न्यभावव्याप्या[1]भाववत्त्वबुद्धिरप्रमेत्यप्रामाण्यग्रहद्वितीयक्षणेऽपेक्षाबुद्ध्यात्मको वह्न्यभावव्याप्याभाववान् पर्वत इत्येतादृशनिर्णयस्तदनन्तरं च वह्न्यभावव्याप्यवान् इति निर्णयो[2]ऽप्रामाण्यग्रहनाशश्च, तदनन्तरं च प[3]ते वह्निप्रत्यक्षं जायतामितीच्छा तदुत्तरोत्पन्नाहार्यतद्विशिष्टबुद्धौ वह्न्यभावव्याप्यो न भासि[3]तुमर्हति तदभावनिर्णयस्य प्राक् सत्त्वात्, अतस्तादृशबुद्धौ व्यभिचारवारणाय इच्छाया उत्तेजकत्वमावश्यकमिति चेत् । तदभावव्याप्याभाववत्तानिर्णयनाशोत्त[4]रमेवाहार्यतद्विशिष्टबुद्धिरुपेयते, तत्र च तदभावव्याप्यवत्त्वभाने बाधकाभावः । अथ वा आहार्यज्ञाने वह्न्यभावव्याप्यपर्वतत्व[5]योरेकत्र द्वयमिति रीत्या धर्मिविशेषणतापन्नयोरेव वह्निधर्मितावच्छेदकत्वमुपेयते, न तु तयोर्विशेषणविशेष्यतावच्छेदकभावः, तथाविधबोधे च पर्वतत्वविशिष्टेवह्न्यभावव्याप्याभाववत्तानिर्णयोऽकिञ्चित्कर एवेति न का[6]चिदनुपपत्तिः । न चैवं पर्वतत्वावच्छिन्नविशेष्यकवह्न्यभावव्याप्यवत्तानिर्णयदशायामिव तच्छून्यकालेऽपि निर्धर्मितावच्छेदक[7]कवह्न्यभावव्याप्यवत्ताज्ञानसत्त्वे इच्छाबलाद् एकत्र द्व[8]यमिति रीत्या वह्न्यभावव्याप्यपर्वतत्वे विशेष्यतावच्छेदकीकृत्य वह्निप्रकारकप्रत्यक्षापत्तिः, तादृशविशिष्टवैशिष्ट्यबोधे पर्वतत्वावच्छिन्नविशेष्यकवह्न्यभावव्याप्यवत्तानिर्णयत्वेनाहेतुत्वा[9]त्, तदानीन्त[10]नवह्न्यादिविशिष्टबुद्धेश्च विरोधिज्ञानानुत्तरतयाऽनाहार्यत्वात्, अनाहार्यज्ञाने च विरोधिधर्मस्य विशेष्यतावच्छेदकतयाऽभानादिष्टापत्तिर्नसंभवतीति वाच्यं, तादृशाहार्यबोधे तथाविधनिर्णयस्य स्वातन्त्र्येणैव हेतुताकल्पनेनापत्त्यसंभवात् । न चाहार्यज्ञाने तादृशनिर्णयस्य स्वातन्त्र्येण हेतुत्वे एकत्र द्वयमिति रीत्या वह्न्यभावव्याप्यपर्वतत्वयोर्वह्निविशेष्यतावच्छेदकत्वं स्वीक्रियते किंवा[11] पर्वतत्वस्य वह्निधर्मितावच्छेदकत्वं तस्य च तदभावव्याप्यधर्मितावच्छेदकत्वमित्यत्र विनिगमकाभाव इति वाच्यं, वह्नेस्तदभावव्याप्यविशेष्यतावच्छेदकत्वोपगमे उक्तध[12]र्मापेक्षया गुरोः प्रतिवध्यतावच्छेदकस्य दुर्वारत्वादिति परास्तम् ।

इच्छाया अ[13]नुत्तेजकत्वेऽपि नित्यसाधारण्यवारणाय चाक्षुषत्वादीनां प्रतिवध्यतावच्छेदकताया आवश्यकत्वात् ।

१ प्या० मा । २ यात् मां । ३ षि० मा । ४ रा० मा । ५ द्व० मा । ६ वा० मा । ७ कव० मा । ८ न्न० मा । ९ त्वातदा० मा । १० न्तु० मा । ११ न्ना मा । १२ र्मापेक्षयात् मा । १३ नु० मा ।

केचित्तु अस्तु च प्रत्यक्षस्थले चाक्षुषत्वादिकमेव प्रतिवध्यतावच्छेदकम्, एवमपि शब्दोऽयमिति स्मृतिषु शाब्दत्वाद्यवच्छेदेन नानाप्रतिवध्यताकल्पनापेक्षया सर्वसाधारणप्रत्यक्षान्य[1]ज्ञानत्वावच्छेदेन एकप्रतिवध्यताकल्पन[2]मेवोचितम्, एवं चानुमितेरपि तदाक्रान्ततया न संशयानुमितिप्रसङ्गः, तदभावव्याप्यवत्तानिर्णयदशायां योग्यताज्ञानानुत्पत्त्यैव शाब्दबोधवारणसंभवात्, उपमितेः शक्तिमा[3]त्रपरिच्छेदकतया पर्वतत्वादिविशिष्टवह्न्यादिवैशिष्ट्यावगाहित्वाभावात् उपमितिवारणसंभवात्, तदभावव्याप्यवत्तानिर्णयेन च विरोधिज्ञानमू[4]लयावत्प्रकारकसंस्कारनाशात् संस्काररूपकारणविरहेणैव तदुत्तरं विशिष्टस्मरणासंभवात् प्रत्यक्षान्यविशिष्टज्ञाने तदभावव्याप्यवत्तानिश्चयस्य प्रतिबन्धकत्वमेव नास्तीति व[5]ल्गनमनालोचनविजृम्भितमेव, तथा हि शाब्दबुद्धौ तदभावव्याप्यवत्तानिर्णयस्याप्रतिबन्धकत्वे योग्यताज्ञानस्य तदभावव्याप्यवत्तानिर्णयाविरोधित्वेन तदुत्तरं यत्र तदभावव्याप्यवत्तानिर्णयस्तदनन्तरं तत्प्रकारकशाब्दबोधापत्तिः, एवं वह्निमत्पर्वतत्वाद्यवच्छिन्नविशेष्यकसा[6]दृश्यप्रत्यक्षजन्यायां तादृशधर्मावच्छिन्नविशेष्यककिञ्चित्पदवाच्यत्वोपमितेः पर्वतत्वादिवैशिष्ट्यावगाहितया उपमितावपि वह्न्यभावव्याप्यवत्तानिर्णयादेः प्रतिबन्धकत्वमावश्यकम्, एवं स्मरणेऽपि तस्य प्रतिबन्धकत्वमावश्यकम्, अन्यथा लौकिकसन्निकर्षादिजन्यवह्न्यादिप्रकारकज्ञानजनितस्य त[7]थाविधसंस्कारस्य तादृशज्ञानाविरोधिना तदभावव्याप्यवत्ताज्ञानेन नाशयितुमशक्यतया तथाविधसंस्कारात् तदभावव्याप्यवत्तानिर्णयोत्तरं विशिष्टस्मरणापत्तिसंभवात्।

स्यादेतत्। एतन्मते तु प्रत्यक्षान्यत्वविशिष्टस्य ज्ञानत्वस्य ज्ञानत्वविशिष्टस्य वा[8] प्रत्यक्षान्यत्वस्यावच्छेदकत्वे विनिगमनाविरहेण प्रतिबन्धकताबा[9]हुल्यमवच्छेदकगौरवं चेत्येतदपेक्षया शाब्दत्वादीनामेव प्रतिवध्यतावच्छेदकत्वमुचितम्।

अथ प्रत्यक्षान्यत्वज्ञानत्व[10]योर्मिथो विनिगमनाविरहेण विशेष्यविशेषणभावे एतन्मते प्रतिबन्धकताद्वयं शाब्दत्वादीनामवच्छेदकत्वे च प्रतिबन्धकतात्रयमिति प्रत्यक्षान्यज्ञानत्वस्यैव तथात्वमुचितम्। न चैवं शाब्दत्वादीनां[11] तथात्वेऽवच्छेदकलाघवेन तेषामेव तथात्वं स्वीक्रियते इति वाच्यं, प्रतिबन्धकभावबुद्धौ अवच्छेदक-

---

१ र्थ० मा० पा०। २ ना० मा० पा०। ३ मत्रे० मा० पा०। ४ सूत्र० मा० पा०। ५ स्वलवना० मा० पा०। ६ तादृ० मा० पा०। ७ विध। मा० पा०। ८ चा। मा० पा०। ९ वाशून्य०। मा० पा०। १० द्वयो०। मा० पा०। ११ स्त०। मा० पा०।

लाघवस्याकिञ्चित्करत्वादिति न शक्यते वक्तुम्[१], यतो न केवलं प्रत्यक्षान्यज्ञानत्वं वह्न्यभावव्याप्यवत्तानिर्णयाभावकार्यतावच्छेदकं, किन्तु वह्न्यादिप्रकारकप्रत्यक्षान्यज्ञानत्वं, तथा च व[२]ह्निप्रकारकत्वविशिष्टं यत् प्रत्यक्षान्यत्वं तद्विशिष्टज्ञानत्वं[३] प्रत्यक्षान्यत्वविशिष्टं यद्वह्निप्रकारकत्वं तद्विशिष्टज्ञानत्वं वाऽवच्छेदकमित्यत्र विनिगमनाविरहात् ज्ञानत्वमवच्छेदकीकृत्य कार्यकारणभावद्वयम्, एवं प्रत्यक्षान्यत्वं वह्निप्रकारकत्वमवच्छेदकीकृत्य प्रत्येकं[४] द्वयं द्वयं कल्पनीयमिति ।

कार्यकारणभावघटकमेतन्मते शाब्दत्वादीनामवच्छेदकत्वकल्पेऽपि[५] वह्निप्रकारकत्वविशिष्टशाब्दत्वं[६] तद्विशिष्टं वा[७] वह्निप्रकारकत्वमवच्छेदकमित्यत्र विनिगमकाभावात् शाब्दस्थले[८] कार्यकारणभावद्वयम्, उपमितिस्मृत्योरपि प्रत्येकमेवोक्तरीया द्वयं द्वयं कार्यकारणभावस्येति[९] साम्यं प्रत्यक्षान्यत्वस्यावच्छेदकत्वे पुनरवच्छेदकगौरवमधिकमिति[१०] ।

अथ शाब्दत्वादीनां तथात्वकल्पेऽपि तेषां त्रयाणामेव तथात्वं कल्पयामः प्रत्यक्षान्यत्वविशेषितज्ञानत्वरूपैकस्य वेत्यत्र विनिगमनाविरहात् तादृशधर्मस्यापि तथात्वं दुर्वारमेवेति, तस्य तथात्वे ज्ञानत्वविशिष्टप्रत्यक्षभेदस्य तथात्वमादाय विनिगमनाविरहस्तु न,तादृशविनिगमनाविरहेऽपि[११] शाब्दत्वादीनां त्रयाणामवच्छेदकत्वकल्पेऽपि ज्ञानत्वविशिष्टप्रत्यक्षभेदस्यापि तथात्वमादाय विनिगमनाविरहसंभवादितिचेत् । तर्हि घटादिकं प्रति दण्डत्वादिना हेतुत्वंकल्प्यते चक्रसमवहितदण्डत्वादिना वेत्यत्र विनिगमनाविरहात् तादृशविशिष्टकल्पनयापि हेतुता प्रसज्येत[१२], विशिष्टस्य हेतुत्वे विशेष्यविशेषणभावे विनिगमनाविरहस्य भवदुक्तदिशाऽकिञ्चितत्करत्वादिति[१३] न किञ्चिदेतत् । मैवम् । यदि सामानाधिकरण्यसम्बन्धेन एकधर्मावच्छिन्नस्यावच्छेदकत्वं स्वीक्रियते तदैव मिथो विशेष्यविशेषणभावे विनिगमनाविरहः प्रसज्येत[१४], वयं तु न तथाविधस्याववच्छेदकत्वं[१५] कल्पयामः, किन्तु एकत्र द्वयमिति रीत्या ज्ञानांशे विशेषणतापन्नानां मिथो विशेषणविशेष्यभावानापन्नानां वह्निप्रकारकत्वप्रत्यक्षान्यत्वज्ञानत्वानामेव तथात्वं, तत्र च

---

१ वह्न्यं । मा० पा० । २ बुद्धि० । मा० । पा० । ३ चा० । मा० पा० । ४ प्रत्यक्षं । मा० पा० । ५ शब्दत्वा० । मा० पा० । ६ शब्द० । मा० पा० । ७ चा० । मा० पा० । ८ शाब्द० । मा० पा० । ९ मिति सास्यं । मा० पा० । १० चर० । मा० पा० । ११ विरह…कस्त्रयाणां । मा० पा० । १२ प्रमद्येत । मा० पा० । १३ देशे० । मा० पा० । १४ सह्येत । मा० पा० । १५ कं । मा० पा० ।

विनिगमनाविरहेण न कार्यकारणभावबाहुल्यप्रसङ्गः,[1] अवच्छेदकभेदेऽपि तावत्स्वेवैकस्या[2] अवच्छेदकताया उपगमादवच्छेदकत्वभेदाभावेन कार्यकारणभावस्यैकत्वम्। न च विशेष्यविशेषणभावानापन्नानां प्रत्यक्षान्यत्वादीनां प्रत्येकमतिप्रसक्ततयाऽवच्छेदकत्वं न संभवतीति वाच्यम्, अवच्छेदकताया[3] व्यासज्य वृत्तित्वोपगमात्प्रत्येकं तादृशधर्माणामतिप्रसक्तत्वेऽप्यवच्छेदकत्वपर्याप्त्यधिकरणस्य[4] त्रितयस्यानतिप्रसक्ततयाऽनुपपत्त्यभावात्[5]। न चावच्छेदकत्वं नातिरिक्तं, किन्तु स्वरूपविशेषः, तस्य च प्रत्येकविश्रान्ततया[6] व्यासज्य वृत्तित्वं न संभवतीतिवाच्यम्, अवच्छेदकस्वरूपत्वे आधाराधेयभावानुपपत्तेरतिरिक्तावच्छेदकत्वस्वीकारावश्यकत्वात्। अतएव महानसीयवह्न्यभावप्रतियोगिताया महानसीयत्व वह्नित्वयोर्व्यासज्य[7]वृत्त्यवच्छेदकत्वमुपपद्यते। न च तत्रोभयोर्नावच्छेदकत्व किन्त्वेकस्यावच्छेदकत्वमन्यस्य सामानाधिकरण्यसम्बन्धेनावच्छेदकतावच्छेदकत्वम्, अवच्छेदकस्य च स्वरूपतोऽतिप्रसक्तत्वेऽपि अवच्छेदकतावच्छेदकविशिष्टस्यानतिप्रसक्तत्वान्नानुपपत्तिरिति वाच्यं, तथा सति शुद्धवह्नित्वादेरपि तादृशा[8]भावप्रतियोगितावच्छेदकत्व[9]पर्याप्त्यधिकरणतया चक्रवर्तिलक्षणेऽवच्छेदकत्वपर्याप्त्यधिकरणत्वविवक्षातो वह्नित्वादे[10]रनवच्छेदकत्वोपपादनस्यासङ्गत्यापत्तेः।

यत्तु अवच्छेदकताया व्यासज्यवृत्तित्वेऽपि एकत्र द्वयमिति रीत्या ज्ञानांशे विशेषणतापन्नानां तादृशधर्माणामवच्छेदकत्वं स्वीक्रियते किं[11] वा एकत्र विशेषणविशिष्टेऽपरवैशिष्ट्यमिति रीत्या ज्ञानविशेषणतापन्नानां तेषामित्यत्र विनिगमनाविरहात् कार्यकारणभावबा[12]हुल्यमस्त्येवेति। तदप्यसत्। एकविशिष्टेऽपरवैशिष्ट्यमिति रीत्या धर्मिविशेषणतापन्नानां तेषामवच्छेदकत्वे कार्यकारणभावग्रहपूर्वं विशेष्यतावच्छेदकप्रकारकज्ञानस्य कल्पनीयतया गौरवात्।

वस्तुतस्तु तादृशविनिगमनाविरहेणावच्छेदकत्वस्यैकस्याक्षततया कार्यकारणभावभेदाभावान्न[13] किञ्चिदेतदित्याहुः।

इदमत्र चिन्तयामः तावद्धर्मवृत्तेरवच्छेदकत्वस्यैक्यमत्यन्तासम्भवदुक्तिमेव, तथा हि प्रत्यक्षभेदादिनिष्ठं यदवच्छेदकत्वं तेनान[14]वच्छिन्ना ये धर्माः स्वरूपतो

---

१ वाशून्य०। मा० पा०। २ सूत्रक०। मा० पा०। ३ तया। मा० पा०। ४ र्मामि०। मा० पा०। ५ द्या०। मा० पा०। ६ श्रम्मेत०। मा० पा०। ७ र्त्वाद्यो०। मा० पा०। ८ श०। मा० पा०। ९ त्वं। मा० पा०। १० देवनव०। मा० पा०। ११ किन्मात्रक०। मा० पा०। १२ शून्य०। मा० पा०। १३ नु। मा० पा०। १४ निनिब०। मा० पा०।

न भासन्ते तन्निष्ठावच्छेदकतायाः किञ्चिद्धर्मावच्छिन्नत्वनियमात् प्रत्यक्षभेदादीनां च कदापि स्वरूपतोऽभानात्, अतः प्रत्यक्षभेदत्वादिकं तदवच्छेदकं वाच्यं, तथा च कथं तादृशमवच्छेदकत्वं ज्ञानत्वादौ वर्तेत, तस्य स्वावच्छेदकीभूतप्रत्यक्षभेदत्वानाश्रयत्वात्, ज्ञानत्वादिवृत्तौ वा कथं न्यूनवृत्तिप्रत्यक्षभेदत्वादिकं तदवच्छेदकं स्यादिति ज्ञानत्वादौ तदनवच्छिन्नमवच्छेदकत्वान्तरं वाच्यमिति प्रस्थितमवच्छेदकताया व्यासज्यवृत्तित्वेन, अपि च ज्ञानत्वनिष्ठमवच्छेदकत्वं समवाया[1]वच्छिन्नं प्रत्यक्षभेदादिनिष्ठं तद्विशेषणताविशेषावच्छिन्नमित्यवच्छेदकताघटकसम्बन्धभेदादवच्छेदकताभेद आवश्यकः ।

अथैवं शुद्धवह्नित्वादेर्हे[2]तुसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकत्वोपपादनं दीधितिकृतामसङ्गतं, तत्राप्यवच्छेदकताघटकसम्बन्धादिभे[3]देनाऽवच्छेदकताया ऐक्यानु[4]पपत्तेः तद्व्यासज्यवृत्तित्वासंभवादित्ये[5]तावता नास्माकमपरा[6]धः । तस्मादवच्छेदकताया व्यासज्यवृत्तित्वासंभवाद् वह्निप्रकारकप्रत्यक्षान्यज्ञानत्वस्यावच्छेदकत्वकल्पे ज्ञानत्वं कार्यतावच्छेदकं प्रत्यक्ष[7]भेदः सामानाधिकरण्यसम्बन्धेन तत्रावच्छेदकः, वह्निप्रकारकत्वं च सामानाधिकरण्यसम्बन्धेन तत्रावच्छेदकमित्युपगन्तव्यमित्युपदर्शितविनिगमनाविरहो ब्रह्मणोऽपि दुर्वारः ।

अथावच्छेदकताशून्यसत्त्व[8]गुणत्वादावपि सामानाधिकरण्यसम्बन्धेन प्रत्यक्षभेदसत्त्वात् कथं तस्य ज्ञानत्वनिष्ठावच्छेदकतावच्छेदकत्वमिति चेत् ? आत्मानमेवोपालभस्व ।

अथ वह्निप्रकारकशाब्दत्वादीनामवच्छेदकत्वकल्पेऽपि शुद्धशाब्दत्वादिकमेवावच्छेदकं[9] वह्निप्रकारकत्वं च सामानाधिकरण्यसम्बन्धेन तत्रावच्छेदकमिति न संभवति, सामानाधिकरण्यसम्बन्धेन वह्निप्रकारत्वस्यातिप्रसक्तत्वादित्यवच्छेदकताया व्यासज्य वृत्तित्वं विना कथमुपपत्तिः । इति चेन्न । शाब्दत्वादिनिष्ठसामानाधिकरण्यसम्बन्धेन[10] वह्निप्रकारकत्वस्यावच्छेदकतावच्छेदकत्वमुपपद्यते, न हि तेन सम्बन्धेन तदतिप्रसक्तमित्यदोष इति ।

यत्तु प्रत्यक्षान्यज्ञानत्वस्यावच्छेदकत्वकल्पे यदि सामानाधिकरण्यसम्बन्धेन प्रत्यक्षत्वावच्छिन्नप्रतियोगिताकभेदस्य ज्ञानत्वांशे विशेषणत्वं स्वीक्रियते, तदैव

---

१ यव० । मा० पा० । २ हे० । मा० पा० । ३ तोदनव० । मा० पा० । ४ मु० । मा० पा० । ५ तोदतावता ना० । मा० पा० । ६ बा० । मा० पा० । ७ क्षातदः । मा० पा० । ८ त्वा० । मा० पा० । ९ शब्द० । मा० पा० । १० शब्द० । मा० पा० ।

विपर्यासेन विशेषणविशेष्यभावमादाय विनिगमनाविरहः, तदेव न, परन्तु स्वावच्छिन्नप्रतियोगिताकभेदसमवायघटितसामानाधिकरण्यसम्बन्धेन प्रत्यक्षत्वस्यैव ज्ञानत्वांशे विशेषणत्वमुपेयते। न च समवायस्वावच्छिन्नप्रतियोगिताकभेदवत्त्व[१]-घटितसामानाधिकरण्यसम्बन्धेन ज्ञानत्वविशिष्टप्रत्यक्षत्वमेव कार्यतावच्छेदक कथं नोच्यते इत्यत्र विनिगमनाविरह इति वाच्यं, तत्र च विशेषणविशेष्यताविपर्यासेन तादृशगुरुसम्बन्धेन प्रत्यक्षत्वस्यावच्छेदकत्वं वाच्यं, मम तु समवायेन ज्ञानत्वमवच्छेदकमित्यवच्छेदकताघटकसम्बन्धलाघवमेव विनिगमकम्, अवच्छेदकतावच्छेदकसम्बन्धस्य चोभयमते एव समशरीरत[२]या प्रत्यक्षत्वस्यावच्छेदकत्वकल्पेऽपि समवायत्वावच्छिन्नप्रतियोगिताकभेदघटितसामानाधिकरण्येन ज्ञानत्वस्य तदवच्छेदकताया वक्तव्यत्वात् ज्ञानत्वांशे तादृशसामानाधिकरण्यसम्बन्धेन प्रत्यक्षत्वस्य विशेषणताविशेषसमवायघटितसामानाधिकरण्यसम्बन्धेन प्रत्यक्षत्वावच्छिन्नभेदस्य वा वैशिष्ट्यं विशेष्यत इत्यत्र विनिगमनाविरह इति तु नाशङ्कनीयं, ज्ञानत्वांशे प्रत्यक्षत्वावच्छिन्नभेदवैशिष्ट्यनिवेशेऽवच्छिन्नत्वांशे प्रत्यक्षत्वप्रतियोगिकसम्बन्धस्य विशेषणताविशेष[३]स्य च निवेशाधिक्यात्, तेन तादृशसम्बन्धेन प्रत्यक्षत्वविशिष्टज्ञानत्वस्य समवायविशेषणताविशेषघटितसामानाधिकरण्येन ज्ञानत्वविशिष्टप्रत्यक्षत्वावच्छिन्नभेदस्यैव वाऽवच्छेदकत्वं स्वीक्रियते इत्यत्र विनिगमकाभावशङ्काऽपि निरस्तेति। तदसत्। एवमपि विषयितादिसम्बन्धेन प्रत्यक्षत्वावच्छिन्नस्य भेदमादायातिप्रसङ्गवारणाय समवायावच्छिन्नस्ववृत्तिप्रतियोगितावच्छेदकताकभेदघटितसामानाधिकरण्यसम्बधेनैव प्रत्यक्षत्वविशिष्टज्ञानत्वस्यावच्छेदकताया वक्तव्यतया स्वावच्छिन्नप्रत्यक्षत्ववृत्तिप्रतियोगितावच्छेदकताकभेदघटितसामानाधिकरण्यसम्बन्धेन समवायविशिष्टज्ञानत्वस्य तत्समशरीरस्यावच्छेदकत्वमादाय विनिगमनाविरहस्य दुरुद्धरत्वात्[४]। किञ्चोपदर्शितसामानाधिकरण्यसम्बन्धेन प्रत्यक्षत्वविशिष्टज्ञानत्वस्य समवायेन शुद्धज्ञानत्वस्य वा स्वावच्छिन्नप्रतियोगिताकभेदघटितसामानाधिकरण्यसम्बन्धेन प्रत्यक्षत्वविशिष्टसमवायेनावच्छेदकत्वं स्वीक्रियत इत्यत्र विनिगमकलेशोऽपीति।

अन्ये तु अस्ति तावद् वह्निमनुमिनोमि न पर्वतत्वादिकमित्यादिप्रतीतिसाक्षिको विधेयताख्यविषयताविशेषः[५], स च प्रत्यक्षव्यावृत्त एव तत्साधारण्ये मानाभावत्, एवं च शा[६]ब्दबोधोपमितित्वादीनां[७] नानाधर्माणां प्रतिवध्यतावच्छे-

१ त्व०। मा० पा०। २ वत्ता। मा० पा०। ३ ष्यच। मा० पा०। ४ श्चरुद्धवत्त्वात्। मा० पा०। ५ ष्य०। मा० पा०। ६ शब्द०। मा० पा०। ७ य०। मा० पा०।

दकत्वापेक्षया लाघवेन विधेयताया एव तथात्वमुपेयते, सा चानुमितिसाधारण्यपि इति न संशयानुमितिप्रसङ्गः। न च तस्याः स्मृतिसाधारण्ये मानाभाव इति वाच्यं, स्मृतिसाधारण्योपगमे तत्र प्रतिबन्धकत्वान्तराकल्पनेन लाघवादेव तस्यास्तथात्व[1]सिद्धेः।

अथ वह्न्यभावव्याप्यवत्तानिर्णयस्य प्रतिवध्यतावच्छेदकं यदि वह्निविधेयत्वं तदा वह्निमान् पर्वतो[2] घटवानित्यादिशाब्दबोधादीनां तदप्रतिवध्यत्वप्रसङ्ग इति चेद्? भ्रा[3]न्तोऽसि। न वयं वह्निविधेयतायास्तदभावव्याप्यात्ताज्ञानस्य प्रतिवध्यतावच्छेदकत्वं व[4]दामः, किन्तु वह्निप्रकारकत्वविशिष्टविधेयतासामान्यस्य, तच्च तादृशशाब्दबोधादिसाधारणमेवेति न का चिदनुपत्तिरित्याहुः। तन्न[5]। विधेयतायाः प्रतिवध्यतावच्छेदकत्वे तर्कात्मकज्ञाने व्यभिचारः, तत्र[6] विधेयतानभ्युपगमे वह्निप्रकारकापत्तित्वावच्छिन्नाभावस्य वह्नि नापादयामीति प्रतीतिविषयताया वक्तव्यत्वात्, वह्निमान् पर्वतो घटवान्[7] स्यादित्याकारकतर्कान्तरे तादृशप्रत्ययानुपपत्तेः तत्र विधेयता[8]त्वस्वीकारस्यावश्यकत्वात्। न चापत्तौ तादृशविधेयता[9]तोऽन्य एवा[10]पत्तिताख्यो विधेयताविशेषः स्वी[11]क्रियते वह्निनापादयामीति प्रतीतेश्च वह्न्यादिवृत्तितादृशविषयतानिरूपकापत्तित्वावच्छिन्नाभाव एव विषयः, न तु वह्न्यादिप्रकारकापत्तित्वावच्छिन्नाभाव इति नोक्तानुपपत्तिरिति वाच्यं, क्लृप्तविधेयताख्यविषयतयैवोपपत्तौ तर्कात्मके ज्ञाने विलक्षणविषयतायां मानाभावादिति।

परे तु शाब्दत्वादिनानाधर्मावच्छेदेन तदभावव्याप्यवत्तानिर्णयादिप्रतिवध्यताकल्पनापेक्षया परोक्षज्ञाने जातिमेकां स्वीकृत्य तदवच्छिन्नत्वेनैव तथात्वकल्पनमुचितम्, तस्या जातेरनुमितिसाधारण्यमावश्यकम्, अन्यथाऽनुमितौ बाधबुद्धेः स्वतन्त्रप्रतिबन्धकत्वकल्पनापत्तेः। एवं चानुमितेरपि तदभावव्याप्यवत्ताज्ञानप्रतिवध्यतावच्छेदकाक्रान्ततया न संश[12]यानुमितिप्रसङ्गः। न चानुभवत्वजात्या सांकर्यात् परोक्षत्वजातिकल्पनं न संभवतीति वाच्यम्, अनुभवत्वजातौ मानाभावात्।

स्यादेतत्। तादृशजातेरनुमितिसाधारण्यं न घटते, तथात्वे भिन्नविधेयकानुमितिसामग्रीप्रतिवध्यतावच्छेदकतया सिद्धेनानुमितिव्यावृत्तजातिविशेषेण

---

१ द्यसीद्धः। मा० पा०। २ णे। मा० पा०। ३ द्भासन्तो०। मा० पा०। ४ च दासः। मा० पा०। ५ न्नि। मा० पा०। ६ तत्त्व। मा० पा०। ७ न। मा० पा०। ८ तास्वी०। मा० पा०। ९ ततो। मा० पा०। १० त्रापत्तिद्वारव्यो। मा० पा०। ११ क्रीयते। मा० पा०। १२ शानु०। मा० पा०।

साङ्कर्यप्रसङ्गात्। तथा हि परोक्षत्वमनुमितौ, तत्र नास्ति अनुमितिसामग्रीप्रतिवध्यतावच्छेदक[1]जातिः, सा च प्रत्यक्षे वर्तते, न तत्र परोक्षत्वं, शब्दबोधादौ द्वयोः समावेशः। न चानुमितिसामग्र्यां चाक्षुषत्वादिप्रकारकेच्छाया उत्तेजकतया चाक्षुषत्वादिकमेव तत्प्रतिवध्यतावच्छेदकं वाच्यं, तथा च कथं तत्प्रतिवध्यतावच्छेदकतया-जातिसिद्धिरिति वाच्यम्, अनुमित्सा[2]विशिष्टानुमितिसामग्र्या भिन्नविषयकानुमित्यन्यज्ञानं प्रति प्रतिबन्धकतायामिच्छाया उत्तेजकत्वाभावात् तादृशप्रतिबन्धकतानिरुपितप्रतिवध्यतावच्छेदकजातिविशेषसिद्धेः।

न च भिन्नविषयकज्ञानत्वमेव तत्प्रतिवध्यतावच्छेदकमस्तु किं वैजात्येनेति वाच्यं, तथा सति अनुमित्साविशिष्टानुमितिसामग्रीकाले घटानुमितिसामग्र्यां सत्यामपि तदनुमित्यनुदयापत्तेः। न च पर्वतत्वावच्छिन्नविशेष्यकवह्न्यनुमितिसामग्र्याः पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्न्यादिप्रकारताशून्यज्ञानत्वमेव प्रतिवध्यतावच्छेदकं वक्तव्यं, तादृशानुमितिसामग्रीकालीनाया घटाद्यनुमितेः[3] पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्न्यादिप्रकारताशालित्वेन तादृशप्रतिवध्यतावच्छेदकानाक्रान्ततया नानुपपत्तिरिति वाच्यं, पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्न्यादिप्रकारताशून्यज्ञानत्वस्य अनुमितिसामग्र्यभावजन्यतावच्छेदकत्वे पर्वतो-वह्निमानित्या[4]कारकप्रत्यक्षादिसामग्रीकाले तथाविधप्रत्यक्षादावु[5]त्पत्स्यमानेऽनुमितिसामग्र्यभावरूपकारणबलात् तादृशप्रकारताशून्यज्ञानत्वावच्छिन्नापत्तेः। तद्वारणाय तादृशवह्न्यादिप्रकारताशून्यज्ञानत्वावच्छिन्नं प्रति तादृशवह्न्यादिप्रकारताशालिप्रत्यक्षादिसामग्रीणां प्रतिबन्धकताकल्पने गौरवात्।

अथ वह्न्यादिप्रकारताशून्यत्वस्य वह्न्याद्यनुमितिसामग्रीप्रतिवध्यतावच्छेदककोटौ निवेशनं तादृशापत्तिवारकसामग्रीप्रतिबन्धकताकल्पनं चावश्यकम्, अन्यथाऽनुमित्साविशिष्टवह्न्याद्यनुमितिसामग्रीकाले तादृशानुमितिप्रतिबन्धकप्रत्यक्षेच्छाविशिष्टसमानविषयकप्रत्यक्षसामग्रीसत्त्वे[6] घटादिप्रत्यक्षोपपत्तये तादृशसामग्रीप्रतिबन्धकतायामिच्छाविशिष्टसमानविषयकप्रत्यक्षादिसामग्र्यभावनिवेशनप्रसङ्गेन महागौरवात्। वह्न्यादिप्रकारताशून्यत्वनिवेशे च तदानीं वह्न्यादिविषयकघटादिप्रत्यक्षस्योत्प[7]त्तौ बाधकाभावात् न तादृशसामग्र्यभावो निवेश्यत इति चेन्न। वह्न्यादिप्रकारताशून्यत्वस्य व[8]ह्न्याद्यनुमितिसामग्रीप्रतिवध्यता-

---

१ को। मा० पा०। २ तसा०। मा० पा०। ३ तिः। मा० पा०।
४ न्नाका०। मा० पा०। ५ व्यु०। मा० पा०। ६ त्वे०। मा० पा०।
७ प्य०। मा० पा०। ८ वह्नयत्वमिति०। मा० पा०।

वच्छेदककोटिनिवेशे यत्रैकदा वह्निघटोभयस्य अनुमित्साविशिष्टानुमितिसामग्री प्रत्यक्षेच्छाविशिष्टप्रत्यक्षसामग्री च तत्र वह्निघटोभयविषयकप्रत्यक्षापत्तिः, उ[१]-क्तयुक्त्या घटानुमितिसामग्र्या अपि घटप्रकारताशून्यज्ञानत्वावच्छिन्नं प्रत्येव विरोधितया तादृशसमूहालम्बनस्य घटानुमितिसामग्र्या अपि अप्रतिवध्यत्वात्। न चेष्टापत्तिः, तदानीं परस्परविरोधेनानुमितेरिव प्रत्यक्षस्याप्यनुत्पादात्। अन्यथा इच्छाविशिष्टवह्निप्रत्यक्षादिसामग्रीकाले तत्प्रतिबन्धकीभूतघटानुमित्सा-विशिष्टतदनुमितिसामग्रीसत्त्वे वह्न्यनुमितिसामग्रीसत्त्वे च वह्न्याद्यनुमित्युप-पत्तये तत्प्रतिवध्यतावच्छेदककोटावपि उ[२]क्तयुक्त्या भिन्नविषयताशून्यत्वनिवेश-प्रसङ्गेन तदानीं समूहालम्बनानुमित्युत्पत्तावपि बाधकाभावात् ज्ञानद्वययौगपद्य-प्रसङ्गात्। तस्मात् सामग्रीप्रतिबन्धकतायां सामग्र्न्तराभाव एव निवेशयितुमु-चितो, न तु प्रतिवध्यतावच्छेदककोटावपि वह्निप्रकारताशून्यत्वमिति।

न चानुमितिसामग्रीप्रतिबन्धकतायां समानविषयकप्रत्यक्षादिसामग्र्य-भावनिवेशेनापि नोपदर्शितस्थले प्रत्यक्षापत्तिवारणं संभवति, वह्न्यादिप्रत्यक्ष-सामग्रीसत्त्वेनानुमितिसामग्र्या असत्त्वादिति वाच्यं, घटाद्यनुमितिसामग्रीसत्त्वेन[३] भिन्नविषयकानुमितिसामग्र्यभावघटिताया वह्न्यादिप्रत्यक्षसामग्र्या अभावात्। न च तत्र घटाद्यनुमितिसामग्र्येव नास्ति तत्प्रत्यक्षसामग्रीस[४]त्त्वादिति वाच्यं, वह्न्याद्यनुमितिसामग्रीप्रतिबन्धकतावच्छेदककोटिप्रविष्टा[५]भावप्रतियोगिन्यां तत्प्र-त्यक्षसामग्र्यां घटादिप्रत्यक्षसामग्र्भावाघटिताया एव घटाद्यनुमितिसामग्र्या अभावनिवेशात्, प्रकृतस्थले च तादृशानुमितिसामग्र्याः सत्त्वेनानुपपत्त्य[६]भावात्।

एतेन सामग्रीप्रतिबन्धकतायां सामग्र्यन्तराभावस्य निवेशे तादृशसामग्र्य-न्तरेऽपि सामग्र्यन्तराभावो निवेश्य इत्येवं क्रमेणानवस्थाप्रसङ्ग इत्यपि परास्तम्। विश्रान्तेरुपदर्शितत्वात्।

अथ भिन्नविषयकानु[७]मित्यन्यज्ञानं प्रति अनुमित्साविशिष्टानुमितिसामग्री-प्रतिबन्धकतायां यदि समानविषयकप्रत्यक्षसामग्र्यभावादिनिवेशन[८]मावश्यकं, तदा 'विशिष्य प्रत्यक्षत्वशाब्दत्वादीनामेव प्रतिवध्यतावच्छेदकत्वमुचितं, प्रत्यक्षशाब्दा-दिसाधारणविजातीयज्ञानत्वावच्छिन्नं प्रति एकप्रतिबन्धकताकल्पने समानविषयक-

१ त्त्न्यमुक्त्या। मा० पा०। २ त्त्न्यनुक्ता। मा० पा०। ३ त्वे०। मा० पा०। ४ त्वा०। मा० पा०। ५ ष्ठा०। मा० पा०। ६ त्य०। मा० पा०। ७ न्त०। मा० पा०। ८ समा०। मा० पा०।

शाब्दसामग्रीसमानविषयकप्रत्यक्षसामग्रीणा[1]मभावकूटस्यैकत्र निवेशनीयतया विशेष्य-विशेषणभावे विनिगमनाविरहेण प्रतिवध्यप्रतिबन्धकभावबाहुल्यात्, वि[2]शिष्य प्रत्यक्षत्वादीनां प्रतिवध्यतावच्छेदकत्वे प्रत्यक्षस्थलीयप्रतिबन्धकतायां प्रत्यक्षसाम-ग्र्यभावानां शाब्दस्थलीयप्रतिबन्धकतायां शाब्दसामग्र्यभावानां निवेशेन तेषामेकत्रा-निवेशात्, न विशेष्यविशेषणभावे विनिगमनाविरहप्रसङ्ग इति चेत्, सत्यम्। इदृशतर्कविशेषेण वह्न्याद्यनुमितिसामग्र्याः प्रतिबन्धकतायां प्रत्यक्षशाब्दत्वानां प्रतिवध्यतावच्छेदकत्वं शक्यते व्यवस्थापयितुम्, एवमप्यनुमित्साविशिष्टगुरुत्वानु-मितिसामग्रीप्रतिवध्यतावच्छेदकतयाऽनुमित्यन्यज्ञानवृत्तिवैजात्यसिद्धिरेव। तत्र समानविषयकलौकिकप्रत्यक्षाप्रसिद्ध्या शाब्दसामग्र्यभावमात्रस्य तादृशानुमिति-सामग्रीघटकतया प्रत्यक्षसामग्र्यभावशाब्दसामग्र्यभावयोरेकत्र निवेशप्रयुक्तो-पदर्शितगौरवाभावेनानुगतप्रतिवध्यप्रतिबन्धकभावकल्पनसंभवात्।

अथास्तां तादृशयु[3]क्त्या जातिविशेषस्तथापि तस्य प्रत्यक्षसाधारण्ये माना-भावः। न च तस्य प्रत्यक्षसाधारण्यानु[4]पगमेऽनुमित्साविशिष्टानुमितिसामग्रीकाले भिन्नविषयकप्रत्यक्षवारणाय प्रत्यक्षस्थले तादृशसामग्र्याः प्रतिबन्धकत्वान्तरस्य कल्पनीयतया गौरवमितिवाच्यं, गुरुत्वानुमित्साविशिष्टगुरुत्वानुमितिसामग्रीकाले तत्समानविषयकोपनीतभानवारणाय तत्र प्रतिबन्धकत्वान्तरकल्पनाया आवश्य-कतया तत्र विषय[5]निवेशे प्रयोजनविरहेण शुद्धप्रत्यक्षत्वस्यैव प्रतिवध्यतावच्छेदक-त्वोपगमात्। त[6]त एव भिन्नविषयकलौकिकप्रत्यक्षादेरपि वारणसंभवेन तादृश-जातेः प्रत्यक्षसाधारण्यविरहेऽपि प्रतिवध्यप्रतिबन्धकता[7]न्तरवृद्धेरभावात्। तादृश-जातेः प्रत्यक्षव्यावृत्तत्वे वह्न्याद्यनुमित्साविशिष्टतदनुमितसामग्र्याः प्रत्यक्षस्थले प्रतिबन्धकताकल्पनमधिकं, तत्र समानविषयकोपनीतभानस्थलीयप्रतिबन्धकतायां समानविषयकलौकिकप्रत्यक्षे व्यभिचारवारणाय लौकिकान्यत्वस्य प्रतिवध्यता-वच्छेदककोटावश्यं निवेशनीयतया ततो भिन्नविषयकलौकिकप्रत्यक्षस्य वारयितु-मशक्यत्वादिति तु प्रागेव निरस्तम्। तादृशजातेः प्रत्यक्षसाधारण्येऽपि तत्र विशिष्य[8] प्रतिवध्यप्रतिबन्धकभावस्यावश्यकत्वात्।

वस्तुतस्तु तत्रापि लौकिकवह्निप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यता-न्यप्रकारताभिन्नविषयतायाः प्रतिवध्यतावच्छेदकत्वमुपगम्य समानविषयकोपनीत-भानस्थलीयप्रतिबन्धकतया भिन्नविषयकलौकिकप्रत्यक्षं शक्यते वारयितुम्।

१ ना०। मा० पा०। २ विशेष्य। मा० पा०। ३ मुक्त्या। मा० पा०। ४ नुग०। मा० पा०। ५ य०। मा० पा०। ६ तत्र। मा० पा०। ७ तारबुद्ध०। मा० पा०। ८ विशेष्य। मा० पा०।

न चैवं सति प्रतिवध्यतावच्छेदकगौरवात् तादृशजातेः प्रत्यक्षसाधारण्यमेवोचितं, तथा सति भिन्नविषयकशा[1]ब्दस्थलीयप्रतिबन्धकतयैव भिन्नविषयकप्रत्यक्षवारणसंभवात् लौकिकान्यप्रत्यक्ष[2]त्वस्य लघुधर्मस्यैव समानविषयकोपनीतभानस्थले प्रतिवध्यतावच्छेदकत्वसंभवादिति वाच्यं, तादृशजातेः प्रत्यक्षसाधारण्ये तया सह सङ्करभिया बाधप्रतिवध्यतावच्छेकजातेः परोक्षत्व[3]स्यानुमितिव्यावृत्तत्वा[4]दगत्याऽनुमितिस्थले बाधबुद्धेः स्वतन्त्रप्रतिबन्धकताकल्पनप्रसङ्गात्, तदपेक्षयाऽवच्छेदकगौरवस्योचितत्वादिति चेन्न। समानविषयकोपनीतभानस्थलेऽनुमितिसामग्रीप्रतिबन्धकतायामनुमितित्वप्रकारिकैव इच्छा निवेशनीया, अनुमितिविषयकेच्छायास्तत्र निवेशे यत्र पर्वते वह्निज्ञानं जायतां पर्वते वह्निप्रत्यक्षं च जायतामित्याकारकेच्छा अनुमितिसामग्री उपनीतभानसामग्रीच, तत्रोपनीतभानानुदयप्रसङ्गात्। तत्र च वह्निज्ञानं जायतामित्याकारकेच्छाया उभयानुकूलतयाऽ[5]किञ्चित्करत्वेन तदसत्त्वे इव तत्सत्त्वेऽपि प्रत्ययस्यैवोत्पत्त्या[6] क[7]ल्पनायाः संभवात्। एवं च तादृशजातेः प्रत्यक्षव्यावृत्तत्वे पर्वते वह्निज्ञानं जायतामित्याकारकेच्छाविशिष्टवह्न्याद्यनुमितिसामग्रीकाले भिन्नविषयकप्रत्यक्षवारणायानुमितिगोचरेच्छाविशिष्टानुमितिसामग्र्यास्तत्र प्रतिबन्धकत्वान्तरकल्पनाधिक्यमेवेति तादृशजातेः प्रत्यक्षसाधारण्यमावश्यकमेवेति।

अथ बाधबुद्ध्यादिप्रतिवध्यतावच्छेदकजातेरनुमितिव्यावृत्तत्वेऽनुमितिस्थले बाधबुद्धेः प्रत्यक्षेच्छाविशिष्टप्रत्यक्षसामग्र्या[8]श्च प्रतिबन्धकत्वान्तरं कल्पनीयमनुमितिसामग्रीप्रतिवध्यतावच्छेदकजातेः प्रत्यक्षव्यावृत्तत्वे च तस्या एव प्रत्यक्षस्थले प्रतिबन्धकत्वान्तरमिति तादृशजातेरेव प्रत्यक्षव्यावृत्तत्वमुचितं, न तु परोक्षत्वजातेरनुमितिव्यावृत्तत्वमितिचेन्न। हेतुतावच्छेदकादिभेदेनानन्ता[9]या बाधाभावादिघटिताया गुरुशरीराया अनुमितिसामग्र्याः प्रतिबन्धकत्वान्तरकल्पनापेक्षया बाधाभावाद्यघटितत्वेन लघुशरीराया अ[10]ल्पतरप्रत्यक्षसामग्र्या बाधबुद्धेश्च प्रतिबन्धकत्वान्तरकल्पनाया एव न्याय्यत्वात्। न च लौकिकप्रत्यक्षे तदिन्द्रियजन्यबाधबुद्धेः प्रतिबन्धकत्वात् कथं प्रत्यक्षसामग्र्या बाधाभावाघटितत्वमिति वाच्यं, बाधाभावस्य प्रत्यक्षहेतुत्वेऽपि समानविषयकप्रत्यक्षसामग्रीप्रतिबन्धकतायां प्रयोजनविरहेण

---

१ शब्द०। मा० पा०। २ क्षस्य। मा० पा०। ३ न्नस्या०। मा० पा०। ४ त्वागत्या। मा० पा०। ५ याहुकिञ्चित्०। मा० पा०। ६ त्या। मा० पा०। ७ फलानाया। मा० पा०। ८ ग्रय०। मा० पा०। ९ न्त०। मा० पा०। १० ताल्प०। मा० पा०।

तदप्रवेशात् बाधकालेऽपि तत्समानविषयकपरोक्षज्ञानस्याप्यनुदयात् । न च समानविषयकानुमित्यादिकं प्रति प्रत्यक्षसामग्रीप्रतिबन्धकतायां निखिलभिन्नविषयकानुमित्यादिसामग्र्यभावानां निवेशात् तादृशसामग्र्यपेक्षया चा[1]ल्पतरसमानविषयकप्रत्यक्षादिसामग्र्यभावघटिताया अनुमितिसामग्र्या एव लघुशरीरतया तस्या एव प्रतिबन्धकताधिक्यं[2] युज्यत इति वाच्यं, वह्निघटोभयस्यानुमितिप्रत्यक्षो[3]भयसामग्रीकाले प्रत्यक्षवारणाय भिन्नविषयकप्रत्यक्षं प्रति अनुमितिसामग्रीप्रतिबन्धकतायां भिन्नविषयकानुमित्यादिसामग्र्यभावघाटिताया एव प्रत्यक्षसामग्र्या अभावनिवेशात् अनुमितिसामग्र्यपेक्षया प्रत्यक्षसामग्र्याः शरीरगौरवाभावादिति ।

वस्तुतस्तु समानविषयकपरोक्षत्वावच्छिन्नं प्रति प्रत्यक्षेच्छाविशिष्टप्रत्यक्षसामग्र्या एकप्रतिबन्धकत्वकल्पने भिन्नविषयकानुमितिसामग्र्यभावतादृशशा[4]ब्दसामग्र्यभावानामेकत्र निवेशनीयतया विशेषणविशेष्यभावे विनिगमनाविरहप्रसङ्ग इति [5]विशिष्य समानविषयकानुमितित्वावच्छिन्नं प्रति अनुमितिमात्रसामग्र्यभावघटितायाः प्रत्यक्षसामग्र्याः पृथक् पृथक् प्रतिबन्धकताकल्पनमेवोचितमिति प्रत्यक्षान्यज्ञानवृत्तिजातेरनुमितिव्यावृत्तत्वं न तादृशसामग्रीप्रतिबन्धकत्वाबाहुल्यप्रयु[6]क्तगौरवसम्पादकम् एतादृशयुक्तया वह्न्याद्यनुमितिसामग्र्याः प्रत्यक्षत्वशाब्दत्वावच्छिन्नं प्रति विशिष्य[7] प्रतिबन्धकताकल्पनस्येति, तत्त्वेऽपि अनुमितिभिन्नज्ञानवृत्तिवैजात्यं प्रागेव व्यवस्थापितमिति । तस्मादनुमित्यन्यज्ञानवृत्तिजात्या सङ्करभयेन तदभावव्याप्यवत्ताज्ञानादिप्रतिवध्यतावच्छेदकजातेरनुमितिसाधारण्यासंभवात् तद भावव्याप्यवत्ताज्ञानं नैतादृशानुमितिं प्रतिबध्नीयादिति न संशयानुमित्यनुपपत्तिले[8]शोऽपीति। मैवम्। अनुमितिसामग्र्याः प्रतिवध्यतावच्छेदकजातेः प्रत्यक्षसाधारण्ये सा जातिः परमेश्वरज्ञानेऽपि स्वीकारणीया, अन्यथा प्रत्यक्षत्वजात्या समं संकरप्रसङ्गात् । न चेश्वरज्ञानस्य प्रत्यक्षत्वजातिसत्त्वे मानाभावान्न[9]सांकर्यमिति वाच्यं, तत्र तादृशजातेर्धर्मिग्राहकमानसिद्ध[10]त्वात् । एवं च तादृशजातेर्नित्यवृत्तितया सामग्र्यभावजन्यतावच्छेदकत्वं नोपपद्यते' जन्यत्वविशेषितायास्तस्यास्तथात्वे विशेष्यविशेषणभावे विनिगमनाविरहः, कालिकसम्बन्धेन घटवत्त्वादिकमादाय विनिगमनाविरहश्चेति । सा प्रत्यक्षव्यावृत्तैव, प्रत्यक्षस्थले चाक्षुषत्वादिकं जन्य-

---

१ ताल्प० । मा० पा० । २ क्यमुन्चत । मा९ पा० । ३ क्षमेय० । मा० पा० । ४ शब्द० । मा० पा० । ५ विशेष्य । मा० पा० । ६ मुक्त० । मा० पा० । ७ विशेष्य । मा० पा० । ८ नोशा० । मा० पा० । ७ मेवम् । ९ नु । मा० पा० । १० ङ्कत्वान् । मा० पा० ।

प्रत्यक्षवृत्तिजातिविशेषं प्र[1]तिवध्यतावच्छेदकीकृत्यानुमितिसामग्र्याः प्रतिबन्धकत्वान्तरकल्पनमप्यावश्यकमेवेति प्रत्यक्षान्यज्ञानवृत्तिजातेरनुमितिसाधारण्ये बाधकाभाव इत्याहुः ।

अत्रेदं चिन्त्यम् । शाब्देच्छाविशिष्टशाब्दसामग्रीकाले समानविषयकोपनीतभानस्यानुमितेश्चानुदयात् तद्वारणाय वि[2]शिष्योपनीतभानत्वानुमितित्वावच्छिन्नं प्रति तादृशसामग्र्याः प्रतिबन्धकताद्वयकल्पनापेक्षया लाघवात् प्रत्यक्षानुमितिसाधा[3]रणीमेकां जातिं स्वीकृत्य तदवच्छिन्नं प्रति तस्या ए[4]कमेव प्रतिबन्धकत्वं कल्प्यते, तादृशजात्या स[5]ङ्करेण च प्रत्यक्षान्यज्ञानवृत्तिजातेरनुमितिसाधारण्यं न संभवतीति । न चानुमितिप्रत्यक्षसाधारणवैजात्यस्य नित्यसाधारण्येन जन्यत्वनिवेशापातात् विशिष्य प्रतिवध्यप्रतिबन्धकभावकल्पनमेवोचितमिति वाच्यम्, इच्छाधीनसमानविषयकलौकिकप्रत्यक्षे व्यभिचारवारणाय लौकिकान्यत्वनिवेशस्यावश्यकतया तद्घटितधर्मस्य नित्यसाधारण्याभावात् । न च शाब्देच्छाविशिष्टशाब्दसामग्रीकाले भिन्नविषयकोपनीतभानवारणाय तत्र तादृशसामग्र्याः प्रतिबन्धकत्वान्तरकल्पनाया आवश्यकत्वात् तत्र विषयमनिवेश्य लौकिकान्यप्रत्यक्षत्वावच्छिन्नं प्रति एव तत्प्रतिबन्धकतायाः कल्पनात् तत एव समानविषयकोपनीतभान[6]वारणसंभवात् समानविषयकानुमितित्वमेव तादृशसामग्रीप्रतिवध्यतावच्छेदकमस्तु किं तादृशवैजात्यकल्पनयेति वाच्यं, शाब्देच्छाविशिष्टशाब्दसामग्रीकाले भिन्नवियकलौकिकप्रत्यक्षवारणाय भिन्नविषयकविजातीय[7]प्रत्यक्षत्वावच्चिन्नं प्रति तादृसामग्र्याः प्रतिबन्धकत्वकल्पनाया आवश्यकत्वाद् भिन्नविषयकोपनीतभानवारणसंभवाद् विषयमनिवेश्य लौकिकान्यप्रत्यक्षत्वावाच्छिन्नं प्रति तादृशसामग्रीप्रतिबन्धकताया अक्लृप्तत्वात् ।

अथ भिन्नविषयकलौकिकप्रत्यक्षादिबाधकपर्वतविशेष्यकवह्न्यादिप्रकारकशाब्दसामग्र्याः प्रतिवध्यतावच्छेदकं वह्न्यादिप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताभिन्नप्रकारतान्यविषयत्वं वाच्यम् । एवंच तद्घटकवह्निप्रकारतायां लौकिकत्वनिवेशेनैव तादृशप्रतिवध्यतावच्छेदकस्य समानविषयकोपनीतभानसाधरण्यसंभवादनुमितिस्थलीयप्रतिवध्यतावच्छेदकस्य तत्साधरण्यविरहेऽपि क्षतिविरहेण किं तादृशवैजात्येनेति चेन्न । भिन्नविषयकप्रत्यक्षस्थलीयप्रतिबन्धकतायां शाब्दत्व-

---

१ स्वाप्पतिः० । मा० पा० । २ विशेष्यो० । मा० पा० । ३ धर० । मा० पा० । ४ एकैकमे० । मा० पा० । ५ शङ्क० । मा० पा० । ६ ने० । मा० पा० । ७ प्रत्वावछिन्नं । मा० पा० ।

प्रकारकेच्छासाधारणशाब्दविषयकेच्छात्वेन इच्छानिवेशात् तत्स्थलीयप्रतिवध्यतावच्छेदकस्य समानविषयकोपनीतभानसाधारण्ये पर्वते वह्निज्ञानं जायतां वह्निप्रत्यक्षं च जायतामित्याकारकेच्छाकालीनवह्न्याद्युपनीतभाने व्यभिचारप्रसङ्गात् ।

न च वह्निमान् पर्वतो घटवानित्याद्यनुमितौ व्यभिचारवारणाय पर्वतत्वावच्छिन्नोद्देश्यतानिरूपितवह्न्यादिविधेयताया एवानुमितिस्थलीयतादृशसामग्रीप्रतिवध्यतावच्छेदककोटौ निवेशनीयतया न तादृशप्रतिवध्यतावच्छेदकस्य प्रत्यक्षसाधारण्यं संभवति, विधेयतायाः प्रत्यक्षसाधारण्ये मानाभावादिति प्रत्यक्षस्थले स्वतन्त्रप्रतिवध्यप्रतिबन्धकभावकल्पनस्यावश्यकतयाऽलं तादृशवैजात्येनेतिवाच्यम्, ए[1]तदनुरोधेनैव वह्न्यादिविधेयतायाः पर्वतो वह्निमानित्यादिप्रत्यक्षसाधारण्योपगमादित्यलं बहुजल्पनया ।

य[2]त्तु शाब्दबोधादिनिष्ठतदभावव्याप्यवत्तानिर्णयप्रतिवध्यतावच्छेकस्यानुमितिसाधारण्यविरहेऽपि अनुस्वातन्त्र्येणैव तदभावव्याप्यवत्तानिर्णस्य प्रतिबन्धकत्वं कल्प्यते, अन्यथा इच्छाविशिष्टवह्न्यभावव्याप्यवान् पर्वत इत्यादिशाब्दबोधादिसामग्रीदशायां पर्वतो वह्निमानित्या[3]कारानुमितेर्वारणाय तत्र तादृशेच्छाविशिष्टशाब्दसामग्रीप्रतिबन्धकत्वस्य कल्पनीयतया गौरवात् तदभावव्याप्यवत्ताज्ञानप्रतिबन्धकत्वमते तु तदभावव्याप्यवत्तानिश्च[4]याभावस्य कार्यकालवृत्तितया हेतुत्वोपगमात् तादृशशाब्दबोधोत्पत्तिदशायां तदभावव्याप्यवत्तानिर्णयसत्त्वेनैवातिप्रसङ्गवारणसंभवात् तादृशसामग्र्याः प्रतिबन्धकत्वं न कल्प्यत इति । तन्न । तदभावव्याप्यवत्तानिर्णयाभावादीनां कार्यसहभावेन हेतुताया अन्यत्र[5]दूषितत्वात् ।

केचित्तु अनुमितित्वावच्छिन्नं प्रति तदभावव्याप्यवत्तानिर्णयप्रतिबन्धकत्वस्वीकारे पर्वतो वह्निमानित्याकारकानुमितौ वह्न्यभावव्याप्यवत्पर्वतत्वाद्यवच्छिन्नविशेष्यताकघटादिप्रकारकप्रत्यक्षसामग्र्या इच्छाविशिष्टायाः प्रतिबन्धकताकल्पनेन लाघवं, तादृशप्रत्यक्षसामग्रीकाले वह्न्यभावव्याप्यवान्पर्वत इत्याकारकविशेष्यतावच्छेदकप्रकारकनिर्णयसत्ताया आवश्यकत्वादेव पर्वतो वह्निमानित्याकारकानुमितेर्वारणसंभवात् । न चैकत्र द्वयमिति रीत्या वह्न्यभावव्याप्यवान् पर्वतो घटवानित्याद्याकारकप्रत्यक्षस्येच्छाविशिष्टसामग्रीदशायां पर्वतो वह्निमानित्याद्यनुमितिवारणाय तादृशसामग्र्याः पृथक् प्रतिबन्धकताया उभयमते एवावश्यकत्वाद्

१ एतत्वनुवेधेनैव । मा० पा० । २ बहु । मा० पा० । ३ त्य० । मा० पा० । ४ च्छ्या० मा० पा० । ५ व । मा० पा० ।

विशिष्टवैशिष्ट्यबोधसामग्रीदशायामपि तत एव तथाविधानुमितिवारणसंभवेन तादृशसामग्रीनियताया विशिष्टवैशिष्ट्यबोधसामग्र्याः पृथक् प्रतिबन्धकत्वकल्पनप्रसक्तिरेव नास्तीति वाच्यम्, एकत्र द्वयमिति रीत्या तादृशप्रत्यक्षसामग्र्या पर्वतत्ववह्न्यभावव्याप्योभयधर्मितावच्छेदककघटप्रकारकप्रत्यक्षं जायतामित्येतादृशेच्छाविशिष्टाया एव प्रतिबन्धकत्वकल्पनाद् वह्न्यभावव्याप्यवत्पर्वतपर्वतत्वाद्यवच्छिन्नविशेष्यताकघटप्रत्यक्षं जायतामित्येतादृशेच्छाघटितविशिष्टवैशिष्ट्यबोधसामग्रीकाले ततोऽनु[1] मित्यापत्तिवारणसंभवादेतादृशेच्छाघटितविशिष्टवैशिष्ट्यबोधसामग्र्याः प्रतिबन्धकत्वान्तरकल्पनाया भवन्मतेऽपि आवश्यकत्वात् ।

न च तादृशोभयेच्छाया वह्न्यभावव्याप्यप्रकारतानिरूपितपर्वतविशेष्यतानिरूपितघटादिप्रकारिताप्रकारकत्वेनानुगमय्य व्यापकसामग्रीप्रतिबन्धकतायां निवेशेनैवोक्तस्थले आपत्तिवारणं संभवतीति वाच्यं, तत्र तादृशेच्छाया अनुगतरूपेण निवेशे विशिष्टवैशिष्ट्यबोधो जायतामित्येतादृशेच्छासत्त्वे विशेष्यतावच्छेदकप्रकारकनिर्णयासत्त्वेऽप्यनुमित्यनुदयप्रसङ्गात् ।

स्यादेतत् । पर्वत्वसामानाधिकरण्यावगाहितदभावव्याप्यवत्तानिर्णयघटितविशिष्टवैशिष्ट्यबोधसामग्रीकाले सामानाधिकरण्येन वह्न्यनुमितिवारणाय तादृशसामग्र्याः सामानाधिकरण्येनानुमितिंप्रति[2] प्रतिबन्धकत्वकल्पनमावश्यकम् ।

न चैवमवच्छेदकावच्छेदेनानुमितिं प्रति तादृशसामग्र्याः प्रतिबन्धकत्वाकल्पनेन लाघवमस्त्येवेति वाच्यं, सामानाधिकरण्यमात्रावगाहिन्यामनुमितौ तत्प्रतिबन्धकत्वे कल्पनीये उभयसाधारणपर्वतत्वावच्छिन्नविशेष्यकसंयोगसंसर्गकवह्न्यनुमितित्वस्यैव प्रतिवध्यतावच्छेदकत्वोपगमादवच्छेदकावच्छेदेनानुमितौ स्वतन्त्रप्रतिबन्धकत्वकल्पनस्य मन्मतेऽप्यभावात् ।

न चावच्छेदकावच्छेदेनानुमितिर्जायतामित्येतादृशेच्छाया उत्तेजकत्वानुरोधादवच्छेदकावच्छेदेनानुमितौ स्वतन्त्रप्रतिबन्धकत्वकल्पनमावश्यकमिति वाच्यं, तादृशसामग्रीदशायां भवन्मते इव मयापि तादृशेच्छाबलाद् अवच्छेदकावच्छेदेनानुमितेरनु[3] पगमात् तादृशेच्छाया उत्तेजकत्वानभ्युपगमात् ।

अथैवमपि पर्वतत्वावच्छेदेन वह्न्यभावव्याप्यवत्तावगाहिविशिष्टवैशिष्ट्यबोधो जायतामित्येतादृशेच्छाविशिष्टा[4]या पर्वतत्वावच्छेदेन वह्न्यभावव्याप्यवत्तानिर्णयघटिताया विशिष्टवैशिष्ट्यबोधसामग्र्याः पर्वतत्वावच्छिन्नपक्षकवह्न्यनुमितिप्रति-

१ न्य० । मा० पा० । २ नास्ति मा० पा० । ३ नुग० । मा० पा० ।
४ ष्टायोः । मा० पा ।

बन्धकत्वाकल्पनेन लाघवमस्त्येव इति चेत् । सत्यम् । एतादृशयुक्त्याऽवच्छेदकावच्छेदेन वह्न्यभावव्याप्यवत्तानिर्णयस्य प्रतिबन्धकत्व[1]मायाति एवमपि सामानाधिकरण्येन तदभावव्याप्यवत्तानिर्णयस्य प्रतिबन्धकताया निर्युक्तिक[2]तया सामानाधिकरण्येनोभयव्याप्यवत्ताज्ञानात् तद्घटितसंशयानुमितिः स्यादेव ।

न च सामानाधिकरण्येनोभयव्याप्यवत्ताज्ञानात् सामानाधिकरण्येनैवोभयानुमितिः स्यात्, सा च न संशयः अवच्छेदकावच्छेदेन एवेतरकोट्यवगाहिज्ञानस्यैव तथात्वादिति वाच्यम्, अवच्छिन्नसंयोगादिरूपसाध्यतावच्छेदकसम्बन्धेन व्याप्त्यवगाहिनः सामानाधिकरण्येन हेतुमत्ताज्ञानादप्यवच्छेदकावच्छेदेनानुमित्युत्पत्त्या तादृशोभयहेतुमत्ताज्ञानादेव संशयानुमितिसंभवात् । मैवम् । सामानाधिकरण्येन तदभावव्याप्यवत्तानिर्णयस्याप्यवच्छेदकावच्छेदेनानुमितिं प्रति[3] प्रतिबन्धक[4]त्वकल्पने[5]न तादृशनिर्णयघटितसामग्र्यास्तथाविधानुमितिं प्रति प्रतिबन्धकत्वाकल्पनप्रयुक्तलाघवमस्त्येव, भवन्मतेऽपि तादृशानुमितौ तथाविधनिर्णस्य स्वतन्त्रप्रतिबन्धकत्वकल्पनाया आवश्यकत्वात् । तथा हि सामानाधिकरण्यमात्रावगाहिन्यामनुमितौ तादृशसामग्र्याः प्रतिबन्धकतायां शुद्धसंयोगादिसंसर्गकानुमितित्वमेव प्रतिवध्यतावच्छेदकं वाच्यम्, अन्यथा कालिकविशेषणताविशिष्टसंयोगसंसर्गकानुमितिर्जायतामित्याकारकेच्छाधीनविशिष्टसंयोगादिसंसर्गकानुमितौ तदभावस्य व्यभिचारप्रसङ्गात् । तादृशेच्छाया अपि तत्रोत्तेजकत्वे तादृशविशिष्टसंसर्गकानुमितिसामग्र्यामसत्यां शुद्धसंयोगादिसंसर्गकानुमितिप्रसङ्गात् । एवं चावच्छेदकावच्छेदेनानुमितेस्तादृशप्रतिवध्यतावच्छेदका[6]नाक्रान्ततया तत्र प्रतिबन्धकत्वान्तरकल्पनमावश्यकमेवेति, तस्मात् तादृशसामग्रीप्रतिबन्धकत्वकल्पनापेक्षया लाघवादवच्छेदकावच्छेदेनानुमितौ सामानाधिकरण्येन तदभावव्याप्यवत्तानिर्णयप्रतिबन्धकत्वसिद्धौ नोपदर्शितसंशयानुमितिप्रसङ्ग इत्याहुः । तदप्यसत् । तथा हि पर्वतत्वावच्छिन्नविशेष्यकवह्न्याद्यनुमितौ पर्वतत्वावच्छिन्नविशेष्यकवह्न्यभावव्याप्यवत्तानिर्णयादीनां प्रतिबन्धकत्वेऽपि द्रव्यत्वाद्यवच्छिन्नविशेष्यकवह्न्याद्यनुमितौ इच्छाविशिष्टाया वह्न्यभावव्याप्यवान् पर्वतो घटवानित्याकारकविशिष्टवैशिष्ट्यबोधसामग्र्याः प्रतिबन्धकत्वमवश्यं कल्प्यं । तथा च तत्रैव धर्मितावच्छेदकमनिवेश्य वह्निविधेकानुमितित्वस्य प्रतिवध्यतावच्छेदकत्वोपगमेन तादृशसामग्रीदशायां पर्वतो वह्निमानित्येतादृशानुमितेः शक्यवारणतया तदभावव्याप्यवत्तानिर्णयप्रतिबन्धकत्वम-

---

१ त्व अमेति । मा० पा० । २ कया । मा० पा० । ३ नास्ति मा० पा० । ४ कक० । मा० पा० । ५ ने । मा० पा० । ६ कीना० । मा० पा० ।

युक्तम् । न च द्रव्यत्वावच्छिन्नविशेष्यताकानुमितिर्जायतां पाषाणमयत्वावच्छिन्न-विशेष्यताकानुमितिर्जायतामित्याकारकेच्छायाः पृथक् पृथगुत्तेजकत्वानु[1]रोधेन धर्मितावच्छेदकनिवेशनमावश्यकम् । अन्यथा सकलेच्छानामेकत्रोत्तेजकत्वे एकधर्मावच्छिन्नविशेष्यताकत्वप्रकारकानुमित्सासत्त्वेऽन्यधर्मावच्छिन्नविशेष्यताकानुमिति - प्रसङ्गादितिवाच्यं, धर्मितावच्छेदकतासम्बन्धेनानुमितिं प्रति स्वीयानुमितिनिष्ठवि-शेष्यतानिरूपितविशेष्यत्वप्रकारतानिरूपितावच्छिन्नत्वप्रकारतानिरूपितप्रकारता - सम्बन्धावच्छिन्नप्रतियोगिताकानुमित्साऽभावविशिष्टसामग्र्याः प्रतिबन्धकत्व-कल्पेनेनैकधर्मावाच्छिन्नविशेष्यताकत्वप्रकारकानुमित्साकालेऽन्यधर्मावच्छिन्नविशे-ष्यकानुमित्यापत्तेरसंभवात् तादृशानुमित्साऽभावस्य धर्मान्तरे तदानीङ्ग[2]तत्वेन तत्र धर्मितावच्छेदकसम्बन्धेनानुमितेरुत्पत्तुमनर्हत्वात् ।

न चेतरकारणसमवहितविशेष्यतावच्छेदकप्रकारकज्ञानात्मिकाया वह्न्य-भावव्याप्यवान् पर्वतो घटवानित्यादिप्रत्यक्षसामग्र्या द्रव्यत्वादिरूपविशेष्यताव-च्छेदकनिष्ठप्रतिबन्धकतावच्छेदकसम्बन्धो दुर्वार इति वाच्यम्, एककालीनत्वस्य कालिकविशेषणतया स्ववृत्तित्वस्य वा तादृशसम्बन्धत्वसंभवात् । यत्तु[3] अनुमितिं प्रति तदभावव्याप्यवत्तानिर्णयप्रतिबन्धकत्वे पर्वतत्वाद्यवच्छेदेन वह्न्याद्यनुमिति-प्रति वह्न्यभावव्याप्यवत्पर्वतत्वावच्छिन्नविशेष्यताकवह्न्याद्यभाववत्तानिर्णयस्य प्रतिबन्धत्वाकल्पनेन लाघवं, तादृशविशिष्टधर्मावच्छिन्नविशेष्यताकबाधबुद्धौ सत्यां तदभावव्याप्यवत्ताज्ञानस्यावश्यकत्वात् तत एव तादृशानुमितिवारण-संभवात्, तदभावव्याप्यवत्तानिर्णयस्याप्रतिबन्धत्वेऽपि तादृशबाधबुद्धेः पृथक् प्रतिबन्धकत्वकल्पनं नास्ति, शुद्धपर्वतत्वधर्मितावच्छेदक[4]कबाधबुद्धेः तत्साधारण-पर्वतत्वावच्छिन्नविशेष्य[5]कवह्न्यभाववत्तानिर्णयत्वेन प्रतिबन्धकत्वकल्पनेनैवोप-पत्तेरिति तु नाशङ्कनीयं । निश्चयत्वनिवेशानुरोधेन वि[6]शिष्य प्रतिबन्धकताया आवश्यकत्वात् । तथा हि नीलपर्वतो वह्निमान् पर्वतो वह्न्यभाववानित्याकारक-समूहालम्बनसाधारण्या[7]य शुद्धपर्वतत्वावच्छिन्नविष्यताकवह्निप्रकारकसंशयभेदस्य बाधबुद्धेः प्रतिबन्धकतावच्छेदककोटौ निवेशनीयतया तस्य नीलपर्वतो वह्निमान्न वेति संशयसाधारण्येन तादृशसंशयस्यापि प्रतिबन्धकत्वापत्तिरतः शुद्धपर्वतत्वावच्छिन्न-विशेष्यतानिरूपितवह्न्यभावप्रकारतैव पर्वतो वह्न्यभाववानित्येतादृशबुद्धिप्रति-

१ अनेन । मा० पा० । २ मङ्गत० । मा० पा० । ३ यत्तू । मा० पा० । ४ कत्व० । मा० पा० । ५ ष्यव० । मा० पा० । ६ विशेष्य । मा० पा० । ७ ण्ये । मा० पा० ।

बन्धकतायां निवेश्या, एवं च कथं तादृशबुद्धयोरेकरूपेण प्रतिबन्धकत्वमिति भवन्मतेऽपि तादृशविशिष्टधर्मावच्छिन्नविशेष्यताकबाधबुद्धेः प्रतिबन्धकत्वान्तर-कल्पनमावश्यकमेवेति। तदप्यनुपादेयमेव। वह्न्यभावव्याप्यवत्तानिर्णयस्य तदनु-मितिविरोधित्वेऽपि तादृग्विशिष्टधर्मावच्छिन्नविशेष्यताकबाधबुद्धेः प्रतिबन्धकत्वा-न्तरकल्पनमावश्यकमेव, अन्यथाऽप्रामाण्यज्ञानानास्कन्दितस्यैव तदभावव्याप्यवत्ता-निर्णयस्य विरोधितया तदभावव्याप्यवत्तांशेऽप्रामाण्यग्रहकाले वह्न्यभावाद्यंशे तदनास्कन्दितवह्न्यभावव्याप्यवान् पर्वतो वह्न्यभाववानित्याकारकबाधबुद्ध्यु-त्तरमनुमित्युत्पादप्रसङ्गात्। न चैतत् कश्चिदुपैति।

अथ पाषाणमयत्वं वह्न्यभावव्याप्यं पाषाणमयत्ववांश्च पर्वत इत्याकारक-ज्ञानसत्त्वे वह्निव्याप्यवत्ताज्ञानाद् निश्चयात्मक[व[1]ह्न्याद्यनुमितेरनुत्पादात्] वह्न्याद्यनुमितित्वावच्छिन्नं प्रति पाषाणमयत्वत्वावच्छिन्नधर्मिकवह्न्यभावव्या-प्यत्वग्रहविशिष्टपाषाणमयत्ववत्तानिर्णयत्वेनैव प्रतिबन्धकत्वान्तरकल्पनमावश्य-कम्। एवंच वह्न्यभावव्याप्यपाषाणमयत्ववान् पर्वत इति विशिष्टज्ञानदशायामपि तादृशप्रतिबन्धकतावच्छेदकावच्छिन्नस्य सत्त्वात् कथं वह्न्यभावव्याप्यपाषाणमय-त्ववान्[2] वह्निव्याप्यधूमवांश्च पर्वत इत्याकारकपरामर्शात् संशयानुमितिरुपपद्यते इति चेत्। माभूत्। साधनतावच्छेदकावगाहिनः परामर्शात् संशयानुमितिः वह्नि-मदन्यावृत्तिमान्[3] वन्ह्यभाववदन्यावृत्तिमांश्च पर्वत इत्याकारकपरामर्शाच्च स्यादेव।

वस्तुतस्तु तादृशज्ञानद्वयादिकाले निश्चयात्मकानुमित्युत्पादस्यापि विवाद[4]-ग्रस्ततया तादृशव्याप्तिज्ञानविशिष्टपाषाणमयत्वादिप्रकारकज्ञानत्वेनानुमिति-प्रतिबन्धकत्वमपि निर्युक्तिकमेवेति साधनतावच्छेदकावगाहिपरामर्शात् संशयानु-मित्युत्पादेऽपि बाधकाभाव इति।

अत्र वदन्ति तत्प्रकारकचाक्षुषत्वावच्छिन्नं प्रति चाक्षुषेच्छाविरहविशिष्ट-तदभावव्याप्यवत्तानिर्णयत्वादिना नानाप्रतिबन्धकत्वकल्पनापेक्षया तदभावव्याप्य-वत्तानिर्णयाभावविशिष्टबुद्धित्वावच्छिन्नं प्र[5]ति तदभावव्याप्यवत्तानिर्णयत्वेनैकमेव प्रतिबन्धकत्वं क[6]ल्प्यते लाघवात्, आहार्यज्ञानस्य तदभावव्याप्यवत्तानिर्णय-विशिष्टत्वान्न[7] व्यभिचारः। न चेच्छां विनापि तदभावव्याप्यवत्तानिर्णयविशिष्ट-

---

१ नास्ति मा० पा०। २ मान। मा० पा०। ३ वान्। मा० पा०। ४ ग्रस्तू०। मा० पा०। ५ नास्ति मा० पा०। ६ कल्पते। मा० पा०। ७ नु। मा० पा०।

प्रत्यक्षापत्तिरिति वाच्यं, चाक्षुषेच्छाविशिष्टचाक्षुषत्वाद्यवच्छिन्नं प्रति चाक्षुषेच्छात्वादिना हेतुत्वकल्पनात् तदभावव्याप्यवत्तानिर्णयविशिष्टतत्प्रकारकचाक्षुषादेः चाक्षुषादिगोचरेच्छाजन्यतावच्छेदका[1]क्रान्ततया तां विनाऽप[2]त्यसंभवात्।

न चेच्छाया हेतुत्वकल्पनाधिक्यान्नायं कल्पः साधीयानिति वाच्यम्, इच्छाया उत्तेजकत्वकल्पेऽप्रामाण्यज्ञानाभावादिभिरिच्छाऽभावानां विशेषणविशेष्यभावे विनिगमनाविरहे[3]णानन्त्यादिच्छाहेतुत्वकल्पनस्यैवोचितत्वात्। एवमेतत्कल्पे तदभावव्याप्याभावविशिष्टबुद्धित्वावच्छिन्नं प्रत्यपि तदभावव्याप्यवत्तानिर्णयाभावस्य हेतुत्वान्तरं न कल्प्यते तद्विशिष्टबुद्धिं प्रति तस्य हेतुत्वे कल्पनीये विषयमनिवेश्य तद्विशिष्टबुद्धितदभावव्याप्याभावादिविशिष्टबुद्धिसाधारणतदभावव्याप्यवत्तानिर्णयाभावविशिष्टत्वस्यैव जन्यतावच्छेदकत्वोपगमात् एककार्यकारणभावेनैवोपपत्तेः। तथा च तत्प्रकारकानुमितेरपि तदभावव्याप्यवत्तानिर्णयाभावविशिष्टत्वरूपतादृशनिर्णयाभावजन्यतावच्छेदकाक्रान्ततया न संशयानुमितिप्रसङ्गः।

अथ तदभावव्याप्यनिर्णयाभावविशिष्टत्वं स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकत्वस्वसामानाधिकरण्योभयसम्बन्धेन वाच्यं, तथा सत्य[4]त्यन्ताभावस्य सदातनतया तदभावव्याप्यवत्तानिर्णयाधिकरणस्यापि प्रतियोग्यनधिकरणदेशावच्छेदेन तदभावाधिकरणत्वात् तदुत्तरक्षणोत्पन्नमाहार्यज्ञानमपि तादृशोभयसम्बन्धेन तदभावव्याप्यवत्तानिर्णयाभावविशिष्टमिति तत्र व्यभिचारो दुर्वार एव, तदव्यवहितपूर्वक्षणावच्छेदेन तदधिकरणे तादृशनिर्णयाभावरूपकारणासत्त्वात्। नच स्वसामानाधिकरण्यस्वाव्यवहितोत्तरक्षणोत्पत्तिकत्वोभयसम्बन्धेन तादृशनिर्णयवदन्यत्वमेव तादृशनिर्णयाभावजन्यतावच्छेदकं वाच्यम्, आहार्यज्ञानस्य च तादृशोभयसम्बन्धेन तथाविधनिर्णयवत्तया तदन्यत्वाभावान्न व्यभिचार इति वाच्यं, तादृशनिर्णयवदन्यत्वस्य नित्यसाधारणतया जन्यतावच्छेकत्वासंभवात्। जन्यत्वादिनिवेशे चोपदर्शितविनिगमनाविरहेणानन्त्यप्रसङ्गात्। मै[5]वम्। स्वावच्छे[6]दकक्षणाव्यवहितोत्तरक्षणोत्पत्तिकत्व-स्वाश्रयसमवेतत्वोभयसम्बन्धेन तदभावव्याप्यवत्तानिर्णयाभावाधिकरणताविशिष्टत्वमेव हि तादृशाभावजन्यतावच्छेदकं वाच्यं, तदभावव्याप्यवत्तानि[7]र्णयाभावोत्पन्नमाहार्यज्ञानं च न स्वाधिकरणनिष्ठतदभावव्याप्यवत्तानिर्णयाभावाधिकरणतावच्छेदकक्षणाव्यवहितोत्तरक्षणोत्पत्तिकं तादृशाधिकरणतायास्तदव्यव-

---

१ कान्त०। मा० पा०। २ पद्य०। मा० पा०। ३ इनानन्त्या०। मा० पा०। ४ त्यन्ता०। मा० पा०। ५ मेवभ्। मा० पा०। ६ दक्षणा०। मा० पा। ७ निर्णयोभावात्। मा० पा०।

हितपूर्वक्षणानवच्छिन्नत्वात्। किन्तु स्वा[1]त्मनिष्ठतदभावव्याप्यवत्तानिर्णयाधिकरण-तावच्छेदकक्षणाव्यवहितोत्तरक्षणोत्पत्तिकं न तु तादृशाधिकरणताश्रयसमवेतमतो नोपदर्शितोभयसम्बन्धेन तादृशाधिकरणताविशिष्टं तदिति व व्यभिचारः।

वस्तुतो नित्यसाधारणधर्मस्य जन्यतावच्छेदकत्वेक्षतिविरहात् तदभावव्या-प्यवत्तानिर्णयविशिष्टान्यत्वमेव तादृशाभावजन्यतावच्छेदकम्। न च नित्यसाधार-णधर्मस्य जन्यतावच्छेदकत्वे कार्यतावच्छेदकावच्छिन्ननित्यव्यक्त्यव्यवहितपूर्वक्षणा-प्रसिद्ध्या तदव्यवहितपूर्वक्षणावच्छेदेन तदधिकरणे कारणस्यासत्त्वाद् व्यभिचार इति वाच्यम्, अव्यवहितपूर्वक्षणावच्छेदेन कारणस्येव कारणाभावस्याप्यसत्त्वेन स्वाव्यवहितपूर्वक्षणावच्छेदेन कार्यसमानाधिकरणाभावप्रतियोगितावच्छेदकवत्त्वरू-पव्यभिचारस्यासंभवात्।

अथ नित्यसाधारणधर्मावच्छिन्ननिरूपितकारणताघटकव्यापकताया अ-प्रसिद्ध्या न तस्य जन्यतावच्छेदकत्वमुपपद्यते। तथा हि तद्धर्मावच्छिन्नाव्यवहित-पूर्वक्षणावच्छिन्नतद्धर्मविशिष्टाधिकरणवृत्तिकाभावप्रतियोगितानवच्छेदकधर्मवत्त्व-रूपव्यापकत्वं न तद्धर्मावच्छिन्ननिरूपितकारणताघटकं घटत्वावच्छिन्नाधिकरणे[2]-ष्वऽपि तदवच्छिन्नव्यक्त्यन्तराव्यवहितपूर्वक्षणाच्छेदेन दण्डत्वाद्यवच्छिन्नाभाव-सत्त्वेन दण्डादीनां घटत्वावच्छिन्नकारणत्वानुपपत्तेः। किन्तु तद्धर्मावच्छिन्ना यावद्व्य[3]क्तयः प्रत्येकं तत्तद्व्यक्त्यव्यवहितपूर्वक्षणावच्छिन्नतत्तद्व्यक्त्यधिकरण-निरूपिताधेयतावच्छेदकधर्मवत्त्वरूपव्यापकत्वमेव तद्धर्मावच्छिन्ननिरूपितकारण-ताघटकं। तत्तद्दण्डत्वादीनामपि घटत्वावच्छिन्नयत्किञ्चिद्व्यक्त्यव्यवहित-पूर्वक्षणावच्छेदेन तत्तद्व्यक्त्यधिकरणनिरूपिताधेयतावच्छेदकत्वात् घटत्वावच्छिन्नं प्रति तत्तद्दण्डत्वादिनापि हेतुताप्रसङ्ग इत्यतो यावदिति। एवं च नित्यसाधारण-धर्मावच्छिन्नयावद्व्यक्त्यन्तर्गतनित्यव्यक्त्यव्यवहितपूर्वक्षणाप्रसिद्ध्या तद्धर्मा-वच्छिन्ननिरूपितव्यापकत्वमप्रसिद्धमिति। मैवं। स्वाव्यवहितपूर्वक्षणावच्छिन्न-स्वाधिकरणवृत्तिकत्वसम्बन्धेन तद्धर्मावच्छिन्नविशिष्टो योऽभावस्तत्प्रतियोगिता-नवच्छेदकधर्मवत्त्वरूपव्यापकत्वमेव तद्धर्मावच्छिन्ननिरूपितकारणताघटकं, घटत्वा-वच्छिन्नव्यक्त्यन्तराव्यवहितपूर्वक्षणावच्छेदेन तादृशव्यक्त्यन्तराधिकरणे दण्डत्वा-वच्छिन्न[4]स्य सत्त्वे[5]न न तादृशाभाव उपदर्शितसम्बन्धेन कयाऽपि घटत्वावच्छिन्न-

१ ल्पात्म०। मा० पा०। २ णेष्वपि। मा० पा०। ३ व्य०... प्र०। मा० प०। ४ न्ना इव। मा० पा०। ५ त्त्वेऽपि। मा० पा०।

व्यक्त्या विशिष्ट इति नोक्तानुपपत्तिः। एवं च नित्यसाधारणधर्मावच्छिन्ननिरूपितैतादृशव्यापकतायाः प्रसिद्धया तस्य जन्यतावच्छेदकत्वेऽपि न क्षतिः।

अथ तदभावव्याप्यवत्ताज्ञानाभावविशिष्टत्वस्य तादृशनिर्णयविशिष्टान्यत्वस्य वा जन्यतावच्छेदकत्वेऽपि संशयानुमितिस्वीकर्तृनये न किञ्चिद् बाधकं, तादृशानुमितेस्तथाविधनिर्णयविशिष्टत्वेन तदभावहेतुतायां व्यभिचारविरहात्।

न चाप्रामाणिकतथाविधानुमितिव्यक्तिकल्पनागौरवमेव बाधकमिति वाच्यं, भवन्मतेऽपि तत्त्वज्ञानान्तरोत्पादस्यावश्यकतया व्यक्तिकल्पनासाम्या[1]दितिचेत्। साधकविरह एव भवन्मते बाधकः परामर्शादिघटितसामग्रीव्याप्तौ प्रयोजनविरहेण तदभावव्याप्यवत्तानिर्णयाभावानिवेशाद् उभयव्याप्यवत्ताज्ञानकालेऽप्यनुमितिप्रयोजकसामग्रीरूपसाधकसत्त्वेन न साधकविरह इति तु न वक्तव्यं, तादृशसामग्रीव्याप्तौ तदभावव्याप्यवत्तानिर्णयाभावानिवेशे तादृशनिर्णयघटितविरोधिसामग्र्यभावनिवेशस्यावश्यकतया तदपेक्षया लाघवेन तादृशनिर्णयाभावनिवेशस्यैवोचितत्वादिति कृतं पल्लवितेन।

स्यादेतत्। अनुमितिं प्रति तदभावव्याप्यवत्तानिर्णयस्य प्रतिबन्धकत्वे भिन्नविषय[2]कप्रत्यक्षादिकं प्रति अनुमितिसामग्रीप्रतिबन्धकतायां तदभावव्याप्यवत्तानिर्णयाभावस्याधिकस्य निवेशेन गौरवम्।

अथानुमित्यादिसामग्रीकाले भिन्नविषयकप्रत्यक्षादिवारणाय प्रत्यक्षत्वावच्छिन्नं प्रति स्ववृत्तिप्रतियोगिकत्वसम्बन्धेन कृतिविशिष्टस्यानुमितिप्रागभावस्यैव प्रतिबन्धकत्वं कल्प्यते, न तु तत्सामग्र्याः, अनुमितिव्यवहितप्राक्कालेऽपि तत्प्रागभावसत्त्वात् कृतिविशिष्टत्वनिवेशनं, स्ववृत्तित्वं च कालिकविशेषणतया, एतादृशसम्बन्धेन कृतिविशिष्टोऽनुमितिप्रागभावश्चानुमित्यव्यवहितप्राक्काले एव वर्तते, तदुत्तरोत्पन्नानुमितेस्तत्कालीनकृतिवृत्तित्वात् तादृशानुमितिप्रागभावस्य तादृशसम्बन्धेन तदानीं कृतिविशिष्टत्वात्, न तु व्यवहितपूर्वकाले, तत्कालीनप्रागभावस्य तदा[3]नीन्तनकृतिवृत्तिप्रतियोगिकत्वसम्बन्धेन कृतिविशिष्टत्वाभावात्। न च सामग्र्या अप्रतिबन्धकत्वे समानविषयकप्रत्यक्षस्थलेऽपि तुल्ययुक्त्या प्रत्यक्षप्रागभावस्यैव प्र[4]तिबन्धकत्वं वाच्यं, तथा च यत्र वह्नेरनुमितिसामग्री प्रत्यक्षसामग्री च तत्र प्रत्यक्षोत्पादाधीनो वह्न्यनु[5]मित्यनुत्पादः, प्रत्यक्षानु[6]त्पादे तादृश-

---

१ सास्यादि०। मा० पा०। २ यप्र० मा० पा०। ३ दलीन्तन०। मा० पा०। ४ अप्रति०। मा० पा०। ५ त्यमि०। मा० पा०। ६ न्नुत्पादे। मा० पा०।

सम्बन्धेन कृतिविशिष्टप्रत्यक्षप्रागभावरूपानुमितिप्रतिबन्धकस्यासत्त्व[1]प्रसङ्गेन वह्न्यनुमित्युत्पादे बाधकाभावात् वह्न्यनुमित्यनुत्पादाधीनश्च प्रत्यक्षोत्पादः, वह्न्यनुमित्युत्पादे प्रत्यक्षप्रतिबन्धकीभूतस्य कृतिविशिष्टानुमितिप्रागभावस्य सत्त्वप्रसङ्गेन प्रत्यक्षोत्पादस्यैवासम्भवादित्यन्योन्याश्रय इति वाच्यं, सामग्रीप्रतिबन्धकत्वकल्पे इव एतन्मतेऽपि विषयं निवेश्य तद्भिन्नविषयकप्रत्यक्षत्वाच्छिन्नं प्रति कृतिविशिष्टतद्विषयकानुमितिप्रागभावत्वेनैव प्रतिबन्धकत्वकल्पनात्, समानविषयकप्रत्यक्षोत्पादस्यानुमित्यनुत्पादानधीनतयाऽन्योन्याश्रयाभावात् ।

न चेच्छाविशिष्टघटादिप्रत्यक्षसामग्रीकाले वह्न्याद्यनुमितिवारणाय तुल्ययु[2]क्त्या वह्न्याद्यनुमितौ कृतिविशिष्टघटादिप्रत्यक्षप्रागभावत्वेन प्रतिबन्धक[3]त्वं वाच्यम्, एवं च यत्र वह्नेरनुमितिसामग्री घटस्य प्रत्यक्षसामग्री तत्र यदि घटप्रत्यक्षमे[4]वोत्पद्यते तदा तादृशप्रतिबन्धकसत्त्वप्रसङ्गेन वह्ने[5]रनुमितिर्न स्यात्, अतस्तत्र तादृशप्रत्यक्षानुत्पादाधीनो वह्न्यनुमित्युत्पादः, तदधीनश्च तादृशप्रत्यक्षानुत्पाद इत्यन्योन्याश्रयो दुर्वार इति वाच्यं, सामग्रीप्रतिबन्धकतायामिव अनुमितिं प्रति कृतिविशिष्टभिन्नविषयकप्रत्यक्षप्रागभावप्रतिबन्धकतायामपीच्छावैशिष्ट्यस्य निवेशादुक्तस्थले प्रत्यक्षोत्पत्तावपि इच्छाविशिष्टतादृशप्रागभावस्यासत्त्वेनानुमित्युत्पत्तौ बाधकाभावात् तदुत्पादो न तादृशप्रत्यक्षानुत्पादाधीनः किन्तु इच्छाऽभावाधीन एवेत्यन्योन्याश्रयाभावात् । एवं यत्र प्रत्यक्षेच्छा तत्प्रत्यक्षसामग्री वह्न्यनुमितिसामग्री च तत्र घटप्रत्यक्षोत्पादाधीनो वह्न्यनुमित्यनुत्पादस्तदधीनश्च घटप्रत्यक्षोत्पाद इत्यन्योन्याश्रय इत्यपि नाशङ्कनीयं । यतो घटप्रत्यक्षं प्रति तदिच्छाविरहविशिष्टस्यैव कृतिविशिष्टवह्न्याद्यनुमितिप्रागभावस्य प्रतिबन्धकत्वकल्पनादुक्तस्थले वह्न्यनुमित्युत्पादेऽपि प्रत्यक्षेच्छाविरहविशिष्टतत्प्रागभावसत्त्वेन प्रत्यक्षोत्पत्तौ बाधकाभावात् । प्रत्यक्षस्योत्पादो नानुमित्यनुत्पादाधीनोऽपि तु इच्छाधीन एवेति । एवं च सामग्र्याः प्रतिबन्धकत्वाभावान्नोक्तगौरवावकाश इति चेन्न । सामग्र्या अप्रतिबन्धकत्वे यत्र वह्न्यनुमितिसामग्री तत्प्रत्यक्षसामग्री घटानुमितिसामग्री घटप्रत्यक्षसामग्री च तत्रानुमितेः प्रत्यक्षस्यचानुत्पादेन कृतिविशिष्टानुमितिप्रागभावस्य कृतिविशिष्टप्रत्यक्षप्रागभावस्य चासत्त्वेन अनुमितिप्रत्यक्षयोरेवोत्पत्तिप्रङ्गात् सामग्रीप्रतिबन्धकत्वकल्पनमावश्यकमेव । तथा चानुमितिं प्रति तदभावव्याप्यवत्तानिर्णयस्य प्रतिबन्धकत्वे सामग्री-

१ त्प्रस० । मा० पा० । २ मुक्त्या । मा० पा० । ३ ता । मा० पा० । ४ स्वत्पद्य० । मा० पा० । ५ ह्नि० । मा० पा० । ६ ग्या० । मा० पा० ।

प्रतिवन्धकतायां तदभावव्याप्यवत्तानिर्णयाभावनिवेशप्रयुक्तगौरवं दुष्परिहरमेव। मैवम्। तदभावव्याप्यवत्तानिर्णयस्यानुमित्यप्रतिबन्धकत्वे तदघटितविशिष्ट-वैशिष्ट्यबोधादिसामग्रीप्रतिबन्धकताया आवश्यकत्वात् अनुमितिसामग्रीप्रतिबन्धक-तायां तादृशसामग्र्यभावनिवेशस्यावश्यकतया लाघवानवकाशः, प्रत्युत विपरीतमेव गौरवं, तदभावव्याप्यवत्तानिर्णयाभावापेक्षया तदघटितसामग्र्यभावस्य गुरुत्वात्। न चानुमितिसामग्रीप्रतिबन्धकतायां तादृशसामग्र्यभावानिवेशे क्षतिविरह इति वाच्यं, तदनिवेशे वह्निव्याप्यवत्तापरामर्शदशायामिच्छाविशिष्टवह्न्यभावव्याप्य-वत्पर्वतत्वावच्छिन्नविशेष्यताकघटादिप्रत्यक्षसामग्रीसत्त्वे घटादिप्रत्यक्षानुदय-प्रसङ्गात्। तदानीं घटप्रत्यक्षं नेष्यत इति चेत्। तर्हि मयापि वह्न्यभावव्याप्य-वत्तानिर्णयादिसत्त्वे वह्न्यनुमितेरितरकारणसमवधाने घटप्रत्यक्षं नेष्यत एव। अतो न मन्मते तदभावव्याप्यवत्तानिर्णयाभावनिवेश[1]प्रयुक्तगौरवम्।

अथ वा सामग्रीविशिष्टान्यज्ञानत्वं सामग्र्न्यभावजन्यतावच्छेदकमित्थं च वह्न्यभाव-व्याप्यवत्तानिर्णयाभावादीनां सामग्रीप्रतिबन्धकतायामनिवेशेऽपि न क्षतिः। तदभा-वव्याप्यवत्ताज्ञानदशायां तदभावाघटितसामग्रीविशिष्टस्यैव भिन्नविषयकप्रत्यक्षादेरु-त्पत्त्या व्यभिचारानवकाशात्। न चैवं तत्स्थलीयसामग्रीबलादनुमित्युत्पत्तिकाले प्रत्यक्षापत्तिरिति वाच्यं, वह्न्यभावव्याप्यवत्तानिर्णयादिविशिष्टज्ञानत्वावच्छिन्नं प्रति तादृशनिर्णयत्वादिना हेतुत्वाकल्पनात् तादृशनिर्णयकालीनप्रत्यक्षसामग्र्यां तादृशनिर्णयस्यान्तभावात् तथाविधसामग्र्या वह्न्याद्यनुमितिप्राक्क्षणेऽसत्त्वादा[2]-पत्त्यभावात्। तादृशनिर्णयविशिष्टज्ञानं प्रति तादृशनिर्णयहेतुत्वकल्पनमधिकमित्यपि नाशङ्कनीयं, वह्न्यभावाद्यनुमितौ तादृशहेतुतायाः क्लृप्तत्वात्।

अथैवं सामग्रीप्रतिबन्धकतायां बाधाऽभावादिनिवेशनमफलमितिचेद्। अफलमेव।

केचित्तु[3] अनुमितिसामग्रीप्रतिबन्धकतायां तदभावव्याप्यवत्तानिर्णयाभाव-निवेशे तदभावव्याप्यवत्तानिर्णयकालीनानां प्रत्यक्षादिगोचरेच्छानामत्तेजकत्वान-भ्युपगमेन लाघवम्।

अथेच्छानां यदि तत्तद्व्यक्तित्वेनोत्तेजकत्वं स्वीक्रियते, तदैव तादृशलाघवं संभवति, तदेव न। घटविषयकप्रत्यक्षं जायतामित्याकारिकाणां घटप्रत्यक्षगोचरे-च्छानां घटविषयकत्वादिप्रकारकप्रत्यक्षगोचरेच्छात्वाद्यनुगतरूपेणोत्तेजकत्वसंभवा-दिति चेत्। तादृशेच्छानामुत्तेजकत्वसंभवेऽपि वह्निभिन्नप्रकारकज्ञानं जायतामि-

१ शेप्र०। मा० पा०। २ गत्य०। मा० पा०। ३ तू। मा० पा०।

त्येतादृशेच्छानामनुगतरूपेणोत्तेजकत्वासंभवः तथा हि तादृशेच्छानां यदि भिन्नविषयकत्वप्रकारकप्रत्यक्षगोचरेच्छात्वेनानुगमस्तदा वह्निघटयोरनुमितिसामग्रीकाले वह्निभिन्नविषयकज्ञानं जायतामित्येतादृशेच्छासत्त्वे घटादिप्रत्यक्षापत्तिः, । न च तादृशेच्छायाः पटानुमितिसामग्रीप्रतिबन्धकतायामनुत्तेजकत्वेन तादृशप्रतिबन्धकसत्त्वान्न[१] घटप्रत्यक्षापत्तिरिति वाच्यं, तादृशसामग्र्यामपि पटभिन्नप्रकारकज्ञानं जायतामित्येतादृशेच्छाया उत्तेजकत्वाद् वह्निभिन्नप्रकारकं पटभिन्नप्रकारं च ज्ञानं जायतामित्येतादृशसमूहालम्बनेच्छाबलाद् उक्तोभयसामग्रीदशायां घटप्रत्यक्षापत्तेर्दुर्वारत्वात् ।

न च तदानीं घटप्रत्यक्षमिष्टमिति वाच्यं, वह्निपटोभयानुमित्युत्पत्त्यैव तादृशेच्छाया उभयविधविषयसिद्ध्या तदानीमनुमितेरेवोत्पादात् तस्मात् तादृशेच्छानां तत्तद्व्यक्तित्वेनोत्तेजकत्वं स्वीकरणीयमिति वह्न्यभावव्याप्यवत्तानिर्णयकालीनतथाविधेच्छाव्यक्तीनामनुत्तेजकतया लाघवं निराबाधमेवेतिचे[२]त् । तदसत् । तादृशेच्छानामपि वह्निभिन्नप्रकारकत्वप्रत्यक्षादिगोचरेच्छात्व[३]रूपानुगतधर्मेणैवोत्तेजकत्वसंभवात् । उपदर्शितस्थलेघटप्रत्यक्षापत्तेस्तादृशेच्छायां स्ववृत्तिप्रतियोगिकत्वसम्बन्धेन कृतिविशिष्टस्य वह्निविधेयकानु[४]मितिप्रागभावस्योत्तेजकत्वमभ्युपगम्यैव वारयितुं शक्यत्वात् ।

अथैवमपि तदभावव्याप्यवत्तानिर्णयस्यानुमितिप्रतिबन्धकतायां न तथाविधनिर्णयकालीनतादृशेच्छाविशिष्टप्रत्क्षादिसामग्रया अनुमितिंप्रति प्रतिबन्धकत्वाकल्पनेन लाघवम् अनुगतरूपेण तादृशेच्छां निवेश्य प्रत्यक्षादिसामग्रयाः प्रतिबन्धकत्वे उपदर्शितसमूहालम्बनानुमित्यनुत्पादापत्तेस्तत्तद्व्यक्तित्वेन तन्निवेशावश्यकत्वादि[५]ति चेन्न । वह्निमात्रविधेयकत्वादेस्तादृशेच्छाविशिष्टप्रत्यक्षसामग्र्याः प्रतिवध्यतावच्छेदकत्वमभ्युपगम्यैवोक्तस्थले समूहालभ्बनानुमितेरुपपादयितुं शक्यत्वात् । उपदर्शितेच्छामनुगतरू[६]पेणैव निवेश्य प्रतिबन्धकतायाः शक्यकल्पनत्वादिति । अत्र केचित् । तदभावव्याप्यवत्तानिर्णयस्य तदनुमितिविरोधित्वे संशयानुमिति[७]र्निराबाधैव, तथा हि यत्र वह्निव्याप्यवान् अभावव्याप्यवांश्च पर्वत इति समूहालम्बनात्म[८]कः परामर्शः, अथ च महानसीयवह्निर्लघुर्महानसीयवह्न्यभावश्च लघुरित्याकारकलाघवज्ञानं ततस्तादृशपरामर्शात् पर्वतत्वविशिष्टे वह्नेरभावस्य

---

१ नु । मा० पा० । २ च दण्डितदसत् । मा० पा० । ३ न्नुरू० । मा० पा० । ४ नुप्राग० । मा० पा० । ५ दिच्चे० । मा० पा० । ६ कल्पेनैव । मा० पा० । ७ ते० । मा० पा० । ८ हुके प० । मा० पा० ।

चानुमितौ जायमानायां तथाविधलाघवज्ञानान्महानसीयत्वं वह्न्यंशे प्रतियोगितया महानसीयवह्निरभावांशे[1]च भासते, तथा च पर्वतत्वावच्छिन्ने महानसीयवह्नित्वावच्छिन्नमहानसीयवह्न्यभावत्वावच्छिन्नयोर्भाने किमवशिष्यते संशयानुमितौ, न हि तत्र क्लृ[2]प्तप्रतिबन्धकताकं किमपि वर्तते य[3]त्तादृशानुमितिं विरुन्ध्यात् न हि शुद्धाभावत्वावच्छिन्नव्याप्यवत्तानिर्णयशुद्धवह्नित्वावच्छिन्नव्याप्यवत्तानिर्णयौ महाननसीयवह्नित्वावच्छिन्नप्रकारकमहानसीयवह्न्यभावत्वावच्छिन्नप्रकारकज्ञानविरोधिनाविति। एवं तादृशपरामर्शात् महानसीयवह्निभिन्नवह्न्यभाववान् पर्वतः महानसीयवह्न्यभावभिन्नाभाववान् पर्वत इत्येतादृशबाधबुद्धिदशायामपि संशयानुमितिर्निराबाधैव, एवं च लिङ्गोपधानमतेऽभावकोटिव्याप्यस्याभावकोटेर्भावकोटिव्याप्यस्य भावकोटेर्धर्मितावच्छेदकतयाऽनुमितौ भानस्यावश्यकत्वात्। धर्मितावच्छेदकभेदेन नीलपर्वतो वह्निमान् पीतपर्वतो वह्न्यभाववानित्याकारकज्ञानस्येव संशयत्वं नोपपद्यत इत्यपि निरस्तं, तन्मतेऽप्यत्रैव विषये वह्निव्याप्यवत्पर्वतान्यो[4]नाभाववान् अभावव्याप्यवत्पर्वतान्यो न वह्निमानित्येतादृशेतरबाधबलाधिकयोर्वह्निव्याप्याभावव्याप्ययोः क्रमेणाभावकोटिभावकोट्योर्विशेष्यतावच्छेदकतया भाने तादृशोभयधर्मविशिष्टपर्वतत्वपर्याप्तोभयकोटिधर्मितावच्छेदकताकसंशयानुमितेर्निर्वाहात्। अत्र केचित् समादधति। लाघवज्ञानादिघटिततद्धर्मावच्छिन्नानुमिनिसामग्रीकाले तदन्यधर्मावच्छिन्नप्रकारकशाब्दबोधादिवारणाय एतादृशसामग्रीप्रतिबन्धकत्वकल्पनं रत्नकोशकृतामप्यावश्यकम्, एवं च तत्रैव परोक्षत्वजातेरनुमितिसाधारण्या एव प्रतिवध्यतावच्छेदकत्वमुपेयतेऽन्यथा शाब्दोपमित्यादिभेदेन तत्प्रतिबन्धकत्वकल्पनापातात्।

न च तत्र शाब्दबोधादिगोचरेच्छानामुत्तेजकत्वानुरो[5]धाच्छा[6]ब्दत्वादिकमेव प्रतिवध्यतावच्छेदकं वक्तव्यमितिवाच्यं, बाधकालीनाया भावबाधसामग्रीकालीना[7]या अपीच्छाधीनबुद्धेराहार्यतया आहार्यायाश्च परोक्षबुद्धेरनुपगमात् तादृशप्रतिबन्धकतायामिच्छाया उत्तेजकत्वाभावात्। अत्रा[8]परेऽभिदधते। बाधसामग्रीकालीनेच्छाकालीन[9]बुद्धेराहार्यत्वस्य प्रामा[10]णिकैर[11]भ्युपगमात् शाब्दबोधादिकं प्रति विरोधिकोट्यनुमितिसामग्न्याः प्रतिबन्धकत्वे इच्छाया उत्तेजकत्वं वाच्यम्, आस्तां वा

१ श्च। मा० पा०। २ ज्ञप्त०। मा० पा०। ३ सत्ता०। मा० पा०। ४ न्य०। मा० पा०। ५ बो०। मा० पा०। ६ त् शब्द०। मा० पा०। ७ नयो। मा० पा०। ८ परेरिव दण्डे। मा० पा०। ९ वह्नि०। मा० पा०। १० म्या०। मा० पा०। ११ व निखलात्। मा० पा०।

लाघवमात्रावलम्बनेन तत्रैव निर्भरस्तथापि तादृशसामग्र्याः शा[1]ब्दत्वाद्यवच्छेदेनैव प्रतिवध्यत्वकल्पनमावश्यकम्। परोक्षत्वजातेः प्रागेव दूषितत्वात्, भवतु वा परोक्षत्वजातिः प्रामाणिकी, संभवतु वा तत्समशी[2]लस्यानुमितिसाधारणधर्मान्तरस्यैव तत्प्रतिवध्यतावच्छेदकत्वम्, एवमपि विशिष[3]य शाब्दत्वादीनामेव तथात्वमुचितम्। अनुमितिसाधारणधर्मस्य तथात्वे उपदर्शितस्थलेऽनुमितेरनुत्पत्त्या[4] भिन्नविषयकप्रत्यक्षाद्युत्पादस्यावश्यकतया तदुपपत्तये लाघवज्ञानघटितानुमितिसामग्र्या भिन्नविषयकप्रत्यक्षादिप्रतिबन्धकतायां लाघवज्ञानघटितविरोधिकोट्यनुमितिसामग्र्यभावस्य निवेशनीयतया महागौरवात्।

न च शा[5]ब्दस्थलीयविरोधिकोट्यनुमितिसामग्रीप्रतिवध्यतावच्छेदकस्यानुमितिसाधारण्येऽपि प्रकृतस्थले शुद्धवह्नित्वादिना वह्न्याद्यनुमितौ बाधकाभावेन तत्र भिन्नविषयकप्रत्यक्षादिकं नोत्पद्यत एव इति कथं लाघवघटितसामग्र्या भिन्नविषयकप्रत्यक्षादिप्रतिबन्धकतायां लाघवज्ञानघटितविरोधिकोट्यनुमितिसामग्र्यभावो निवेशनीय इति वाच्यं, लाघवज्ञानजन्यमहानसीयवह्नित्वाद्यवच्छिन्नविधेयकानुमितिसामग्रीकाले शुद्धवह्नित्वादिपर्याप्तविधेयतावच्छेदकताकानुमितेरनुभवविरुद्धतया तादृशानुमितौ लाघवज्ञानस्य प्रतिबन्धकतायाः कल्पनीयतया उपदर्शितस्थले तथाविधानुमितेरनु[6]त्पादे प्रत्यक्षाद्युत्पादस्यावश्यकत्वात्। मास्तु वा तादृशानुमितौ लाघवज्ञानस्य प्रतिबन्धकत्वं, तथापि तदानीं तथाविधानुमितिप्रतिबन्धकीभूतशुद्धवह्नित्वावच्छिन्नप्रकारकसिद्धिसत्त्वे तथाविधानुमितेरप्युत्पादासंभवेन प्रत्यक्षादेरुत्पादावश्यकतया त[7]दुपपत्तये एव कोट्यनुमितिजनकीभूतलाघवज्ञानघटितसामग्रीप्रतिबन्धकतायां तथाविधापरकोट्यनुमितिसामग्र्यभावनिवेशनमावश्यकमेव।

न च तत्र प्रत्यक्षाद्युत्पत्तये तथाविधसिद्ध्यभाव एव तादृशसामग्रीप्रतिबन्धकतायां निवेश्यते न पुनरपरकोट्यनुमितिसामग्र्यभाव इति वाच्यं, तथा सति लाघवज्ञानघटितापरकोट्यनुमितिसामग्र्यामस[8]त्यां पर्वतो वह्निमानित्येतादृशसिद्धिसत्त्वे लाघवज्ञानघटितमहानसीयवह्नित्वावच्छिन्नविधेयकानुमितिसामग्रीकाले भिन्नविषयकप्रत्यक्षाद्यापत्तेः। एवं तादृशलाघवज्ञानघटितोभयकोट्यनुमितिसामग्रीदशायां पर्वतो वह्निमान् पर्वतोऽभाववान् इत्येतादृशसिद्धिसत्त्वे महानसीयवह्नित्वावच्छिन्नतद-

---

१ शब्दत्वान्यवच्छे०। मा० पा०। २ सील०। मा० पा०। ३ ष्ट्य। मा० पा०। ४ त्वा० मा० पा०। ५ शब्द०। मा० पा०। ६ नुत्पद्यो। मा० पा०। ७ तनुपपत्य। मा० पा०। ८ सत्यां। मा० पा०।

भावयोरन्यतरस्य शा[1]ब्दसामग्रीसत्त्वेऽनुमितेरनुदयेन शा[2]ब्दबोधस्यावश्यकत्वात् शाब्दस्थलीयलाघवज्ञानघटितानुमितिसामग्रीप्रतिबन्धकतायां तथाविधापरकोट्यनुमितिसामग्र्यभावोऽवश्यं निवेशनीयः। तथा च तादृशसामग्र्यभावघटितविरोधिसामग्र्यभावस्य सत्त्वात् कथं संशयानुमितिं वारयिष्यसि ?

अत्राहुः अनुमितिं प्रति लाघवज्ञानघटितविरोधिकोट्यनुमितिसामग्र्याः पृथगेव प्रतिबन्धकत्वं कल्प्यते। अतो नोपदर्शितस्थले संशयानुमितिप्रसङ्गः। एतादृशप्रतिबन्धकताधिक्याद् गौरवमिति मानहीनं वचः। एतत्कल्पे पर्वतत्वावच्छिन्नविशेष्यकमहानसीयवह्न्याद्यनुमितौ लाघवादिविशिष्टमहानसीयवह्न्यभावकालीनत्वादिविशिष्टाभावव्याप्यवत्पर्वतत्वावच्छिन्नविशेष्यताकघटशाब्दबोधादिसामग्र्या इच्छाविशिष्टा[3]याः प्रतिबन्धकत्वाकल्पनेन लाघवसंभवाद् एतादृशशाब्दसामग्रीकाले तद्घटकीभूतोपदर्शितविशेष्यतावच्छेदकप्रकारकनिश्चयसत्ताया आवश्यकत्वात्। क्लृप्तप्रतिबन्धकताकोपदर्शितलाघवज्ञानविशिष्टाभावव्याप्यवत्तापरामर्शसत्त्वेनैव तादृशानुमितिवारणसंभवात्। न च लाघवज्ञानघटितविरोधिकोट्यनुमितिसामग्रीप्रतिबन्धकतायां महानसीयवह्न्यभावाभाववान् पर्वत इत्येतादृशबाधबुद्ध्यभावोऽवश्यं निवेशनीयः, तत्सत्त्वे महानसीयवह्निमान् पर्वत इत्येतादृशानुमित्य[4]नुत्पत्तेः। एवं च तथाविधबाधकाले तादृशधर्मावच्छिन्नविशेष्यताक( सामग्री )महानसीयवह्न्यभावादिविधेयकशाब्दसामग्रीप्रतिबन्धकत्वाकल्पनेन लाघवसंभवात्।

एवमभावव्याप्यवत्पर्वतत्वावच्छिन्नविशेष्यताकलाघवविशिष्टमहानसीयवह्न्यभावत्वावच्छिन्न[5]स्य वि[6]शिष्य शाब्दसामग्रीसत्त्वे तथाविधानुमितेर्वारणाय तादृशसामग्र्याः प्रतिबन्धकत्वकल्पनमावश्यकमिति वाच्यं, तादृशधर्मावच्छिन्नविशेष्यताकमहानसीयवह्न्यभावादिविधेयकशाब्दसामग्रीकाले तथाविधबाधाभावसत्ताया आवश्यकत्वात् तादृशानुमितिसामग्रीप्रतिबन्धकतायां तथाविधबाधाभावनिवेशेऽपि तादृशधर्मावच्छिन्नविशेष्यताकशुद्धपर्वतत्वावच्छिन्नविशेष्यताकाऽभावव्याप्यवत्पर्वतकालीनत्वादिविशिष्टलघुमहानसीयवह्न्यभावत्वाद्यवच्छिन्नविशेषणताकशाब्दादिसामग्रीणामपि लाघवज्ञानबाधाभावादिविशिष्टतादृशपरामर्शनियततया एतन्मते ता[7]सां प्रतिबन्धकत्वाकल्पनेनापि लाघवं बोध्यम्।

१ शब्द०। मा० पा०। २ शब्द०। मा० पा०। ३ ष्टयोः। मा० पा०। ४ त्युत्पत्तेः। मा० पा०। ५ न्नक० मा० पा०। ६ विशेष्य। मा० पा०। ७ ताषां। मा० पा०।

न च बाधाभावस्य कार्यसहभावेन हेतुत्वादेव तादृशशाब्दबोधादिसामग्रीकाले महानसीयवह्न्यनुमितिवारणसंभवे तत्र तादृशसामग्रीप्रतिबन्धकत्वमस्माकमपि नास्तीति वाच्यं, बाधाभावस्य कार्यसहभावेन हेतुत्वस्यान्य[1]त्र भूयो दूषितत्वात्। न च तादृशानुमितिसामग्रीप्रतिबन्धकतायां सिद्ध्यभावनिवेशस्यावश्यकतया तादृशानुमितिप्रतिबन्धकीभूतसिद्धिकाले तथाविधशाब्दसामग्रीसत्त्वे महानसीयवह्न्यनुमितिवारणाय तादृशसामग्र्या अपि प्रतिबन्धकत्वकल्पनमावश्यकमिति-वाच्यं, महानसीयवह्न्यभाववान् पर्वत इत्येतादृशानुमितिप्रतिबन्धकीभूतायाः सिद्धेर्विरोधिमुद्रया महानसीयवह्निमान् पर्वत इत्येतादृशानुतितिविरोधितया तत्सत्त्वे महानसीयवह्निमान् पर्वत इत्येतादृशानुमितेरप्यनुत्पत्त्या सिद्ध्यभावमनि वेश्यैव विरोधिकोट्यनुमितिसामग्र्याः प्रतिबन्धक[2]त्वकल्पनात्।

अथ लाघवज्ञानसहकृताभावव्याप्यवत्तानिर्णयजन्यानुमितावपि अभावत्वमात्रं विधेयतावच्छेदकं, तथा चाभाववान् पर्वत इत्येतादृशसिद्धिरपि तादृशानुमितिविरोधिनी, युक्तं चैतत् एतादृशानुमितिर्विरोधिनी[3]तस्यास्तथाविधसिद्ध्यप्रतिवध्यत्वेऽभाववत्पर्वतत्वंधर्मितावच्छेदकीकृत्य भिन्नविषयकप्रत्यक्षादौ तथाविधसिद्ध्यभावमनिवेश्य लाघवज्ञानं च निवेश्यानुमितिसामग्र्याः प्रतिबन्धकत्वकल्पनप्रसङ्गात्। तन्मते तु तदानीं विशेष्यतावच्छेदकप्रकारकज्ञानमुद्रया अभाववान् पर्वत इत्याकारकज्ञानस्यावश्यकत्वात् सिद्धिसत्त्वेन नानुमिते[4]रुत्पत्तिः। तथा च लाघवज्ञानविशिष्टा[5]भावव्याप्यवत्ताज्ञानाद् अभाववान् पर्वत इत्येतादृशसिद्धिसत्त्वे महानसीयवह्निमानित्यनुमित्युदयात् तादृशसिद्ध्यभावस्य विरोधिकोट्यनुमितिसामग्रीप्रतिबन्धकतायामवश्यं निवेशनीयतया तथाविधसिद्धिकाले तादृशविशिष्टधर्मावच्छिन्नविशेष्यताकशा[6]ब्दादिसामग्रीकाले महानसीयवह्न्यनुमितिवारणाय तादृशशाब्दबोधादिसामग्र्याः प्रतिबन्धकत्वमावश्यकमेवेति न विरोधिकोट्यनुमितिसामग्र्याः प्रतिबन्धकत्वे लाघवावकाशः।

अथैवं शा[7]ब्दस्थलीयविरोधिकोट्यनुमितिसामग्रीप्रतिबन्धकत्वेऽनुमिति-साधारणपरोक्षत्वस्यापि प्रतिवध्यतावच्छेदकत्वं संभवति तत्रोपदर्शितस्य भिन्नविषयकप्रत्यक्षादिकं प्रति लाघवज्ञानघटितानुमितिसामग्रीप्रतिबन्धकतायां तथाविधविरोधिसामग्र्यभावनिवेशप्रयुक्तगौरवस्येदानीमनवकाशात्, अतः पर्वतो वह्निमानित्यादिसिद्ध्यभावस्य लाघवज्ञानजन्यानुमितावपि हेतुतया प्रत्यक्षादौ तादृशसामग्र्याः प्रतिबन्धकत्वमेव नास्ति।

---

१ न्यभू०। मा० पा०। २ कक०। मा० पा०। ३ तस्तथा०। मा० पा०। ४ ति०। मा० पा०। ५ ष्ट भा०। मा० पा०। ६ शब्दा०। मा० पा०। ७ शब्द०। मा० पा०।

यच्चोक्तं शाब्दस्थलीयविरोधिकोट्यनुमितिसामग्र्यभावनिवेशनमावश्यकम्, अन्यथा लाघवज्ञानघटितोभयकोट्यनुमितिसामग्रीदशायां पर्वतो वह्निमानित्यादिसिद्धिसत्त्वे शाब्दबोधानुपपत्तेरतः संशयानुमितिर्दु[1]र्वारैव। तदपि न। यतस्तादृशसिद्ध्यभावस्यैत[2]न्मते तथाविधसामग्र्यां निवेशादेव तत्र शा[3]ब्दबोधोपपत्तेरपरकोट्यनुमितिसामग्र्यभावनिवेशनमनर्थकमिति चेत् सत्यम्। एवमपि लाघवज्ञानघटितोभयव्याप्यवत्तापरामर्शदशायामसत्योरपि तथाविधसिद्ध्योरिच्छासत्त्वे महानसीयवह्न्यादिशाब्दधीरवश्यमुत्पद्यते, श्रुत्वापरकोट्यनुमितिसामग्र्यभावघटिताया अनुमित्यात्मकतथाविधविरोधिसामग्र्या असत्त्वात्। इच्छाधीनतत्कालीनज्ञानस्यानाहार्यत्वात्, एवंच तत्र तादृशशाब्दबोधोपपत्तये शाब्दस्थलीयविरोधिकोट्यनुमितिसामग्रीप्रतिबन्धकतायामपरकोट्यनुमितिसामग्र्यभावस्यावश्यं निवेशनीयतया न शाब्दस्थलीयप्रतिबन्धकतया संशयानुमितिवारणसंभवः। एवमुपदर्शितलाघवज्ञानघटितसामग्रीदशायामभाववान् पर्वतोवह्निमान्पर्वतइत्येतादृशोभयविधसिद्धिसत्त्वे उभया[4]नुमित्सासत्त्वे संशयानुमितिवारणमशक्यमेव। तथाविधसिद्धिकाले विरोधिकोटेः[5] शाब्दबोधोपपादनाय तत्र सिद्ध्यभावघटिताया एव लाघवज्ञानघटितविरोधिकोट्यनुमितिसामग्र्याः प्रतिबन्धकत्वस्य कल्पनीयतया उपदर्शितस्थले तादृशविरोधिकोट्यनुमितिसामग्रीविरहेणानुमित्युत्पत्तौ बाधकाभावात्। न चानुमित्सातादृशसिद्धिसत्त्वे सति चानुमितेरितरकारणकलापे शाब्दबोधादिवारणायानुमित्साविरहविशिष्टसिद्ध्यभाव एव सामग्रीप्रतिबन्धकतायां निवेशनीयः। एवंच प्रकृतस्थले तादृशविशिष्टाभावघटितविरोधिकोट्यनुमितिसामग्र्याः सत्त्वात् न संशयानुमित्यापत्तिरिति वाच्यम्[6] अनुमित्सादशायां भिन्नविषयकानुमित्यन्यज्ञानत्वावच्छिन्नप्रतिबन्धकीभूतानुमित्साविशिष्टानुमितिसामग्रीसत्त्वेनैव शाब्दबोधवारणसंभवेन उपदर्शितसामग्रीप्रतिबन्धकतायां विशिष्टाभावनिवेशस्य निष्प्रयोजनकत्वादितिचेन्मैवम्। लाघवज्ञानजन्यानुमितावपि महानसीयवह्न्यभावत्वादावेव विधेयतावच्छेदकतायाः पर्याप्तिरुपेयते, न तु[7] शुद्धाभावत्वादौ। न चैवमुपदर्शितलाघवघटितसामग्र्याः प्रतिबन्ध[8]कताऽऽधिक्यान्नैतदेवमिति वाच्यं, तादृशसामग्र्याः प्रतिबन्धकताऽऽधिक्येऽपि लाघवविशिष्टमहानसीयवन्ह्यभावव्याप्यत्वादिरूपहेतुतावच्छेदकविशिष्टमहानसीयवह्न्यभावत्वावच्छिन्ननिरूपितव्याप्त्यवगाहिपरामर्श -

१ दुर्वा०। मा० पा०। २ वन्म०। मा० पा०। ३ शब्द०। मा० पा०। ४ यत्वेभित्सा०। मा० पा०। ५ टे०। मा० पा०। ६ पोयते। मा० पा०। ७ शु। मा० पा०। ८ क अधिक्यादेशेरेवमि। मा० पा०।

घटिताया अभाववान् पर्वत इत्येतादृशसिद्ध्यभावघटिताया महानसीयवह्न्यभावत्वावच्छिन्नविधेयकानुमितिसामग्र्याः प्रतिबन्धकत्वाकल्पनेन लाघवसंभवात्। एवं च महानसीयवह्न्याद्यनुमितौ तादृशमहानसीयवह्न्याद्यभावाद्यनुमितिसामग्रीप्रतिबन्धकतायामभाववान् पर्वत इत्येतादृशसिद्ध्यभावस्यानिवेशात् तादृशसामग्रीप्रतिबन्धकतामते उपदर्शितशाब्दसामग्रीप्रतिबन्धकत्वाकल्पनप्रयुक्तलाघवमक्षुण्णमेवेति।

यच्चोक्तमुपदर्शितस्थले संशयानुमित्यनभ्युपगमे भिन्नविषयकप्रत्यक्षादिकं प्रति अनुमितिसामग्रीप्रतिबन्धकतायां विरोधिकोट्यनुमितिसामग्र्यभावनिवेशाद्[1] गौरवमिति। तदप्यसत्। तन्निवेशे घटादिशाब्दबोधादिकं प्रति अनुमितिसामग्रीप्रतिबन्धकतायामुपदर्शितेच्छाविशिष्टशाब्दसामग्र्यभावानिवेशेन लाघवसंभवात्। अन्यथा इच्छाविशिष्टो[2]पदर्शितशाब्दसामग्र्यां[3] सत्यामसत्यां च घटादिशाब्दबोध[4]सामग्र्यां वह्निव्याप्यवत्ताज्ञानसत्त्वे घटादिशाब्दबोधोपपत्तये तादृशशाब्दसामग्र्यभावनिवेशस्यावश्यकत्वात्।

अथवा अभावव्याप्यवान् वह्निव्याप्यवांश्च पर्वत इत्येतादृशपरामर्शदशायामुपदर्शितोभयविधलाघवज्ञानसत्त्वे महानसीयवह्नित्वावच्छिन्नाभावस्यानुमितिः स्वीक्रियते, न तु महानसीयवह्नेरिति न संशयानुमितिः। एवं च तत्र भिन्नविषयकप्रत्यक्षादेर[5]नुत्पत्तेः तत्स्थलीयानुमितिसामग्रीप्रतिबन्धकतायां नापरकोट्यनुमितिसामग्र्यभावनिवेशप्रयुक्तगौरवमिति।

अथ तत्र महानसीयवह्नेरनुमितिरुपगम्यते न तु महानसीयवह्न्यभावस्येत्येव किं न स्यादि[6]ति चेन्न। तत्र महानसीयवह्नेरनुमितिस्वीकारे तादृशानुमितौ उपदर्शितलाघवज्ञानघटितमहानसीयवह्न्यभावानुमितिसामग्र्याः प्रतिबन्धकत्वासंभवेन लाघवविशिष्टमहानसीयवह्न्यभावकालीनत्वादिविशिष्टाभावव्याप्यवत्पर्वतत्वावच्छिन्नविशेष्यताकमहानसीयवह्न्यभावविधेयकशाब्दसामग्र्याः प्रतिबन्धकत्वकल्पनमावश्यकं, किन्तु महानसीयवह्न्यभावानुमितावेव लघुमहानसीयवह्निकालीनत्वविशिष्टवह्निव्याप्यवत्पर्वतत्वावच्छिन्नविशेष्यताकमहानसीयवह्निविधेयकशाब्दसामग्र्याः प्रतिबन्धकत्वं न कल्पनीयं, तत्र महानसीयवह्न्यभावानुमित्यभ्युपगमे तत्र तद्विपरीतं, तत्र च उपदर्शितमहानसीयवह्न्यभावविषयकशाब्दबोधस्योपदर्शितमहानसीयवह्निविषयकशाब्दापेक्षयाऽधिकविषयकतया

---

१ घैरेवमि०। मा० पा०। २ ष्ट उ०। मा० पा०। ३ सद्यां सत्यांच। मा० पा०
४ घे। मा० पा०। ५ रनुतपद्यते स्थली०। मा० पा०। ६ दिचे०। मा० पा०।

तत्सामग्र्या अ[1]पि गुरुशरीरतया तत्प्रतिबन्धकत्वाकल्पनमेव समीचीनं, तत्र महानसीयवह्न्यनुमितिस्वीकारेऽनुमितिं प्रति विरोधिकोट्यनुमितिसामग्र्याः प्रतिबन्धकत्वे लाघवं, मन्मते महानसीयवह्न्यभावानुमितौ महानसीयवह्न्यनुमितिसामग्र्या अ[2]प्रतिबन्धकतया तस्याश्च महानसीयवह्न्यभावानुमितिसामग्र्यपेक्षया लघुशरीरत्वादिति पुन[3]रकिञ्चित्करम्, उपदर्शितशाब्दसामग्र्यास्तथाविधानुमितिसामग्र्यपेक्षया बहुविधतया भवन्मतेऽनेकप्रतिबन्धकतया गौरवात्। एवं शा[4]ब्दादिस्थलीयविरोधिकोट्यनुमितिसामग्रीप्रतिबन्धकतानिरूपितप्रतिघ्यतायां परोक्षत्वस्यावच्छेदकत्वकल्पेऽपि उपदर्शितस्थले महानसीयवह्न्यभावानुमितिः स्वीक्रियते, न तु महानसीयवह्नेरनुमितिरित्येवोचितम्, अन्यथा महानसीयवह्न्यभावानुमितिसामग्रीप्रतिवध्यतावच्छेदककोटौ परोक्षत्वादिनिवेशासंभवेन शा[5]ब्दत्वादेरेव तत्र निवेशनीयतया महानसीयवह्न्यनुमितिसामग्र्यपेक्षया गुरुशरीरा[6]यास्तादृशसामग्र्याः शा[7]ब्दोपमितिस्मृतिभेदेन प्रतिबन्धकताबाहुल्यादिति। एवं चैतन्मतेऽप्यनुमितिसामग्रीप्रतिबन्धकतायां नोपदर्शितापरकोट्यनुमितिसामग्र्यभावनिवेश इति। एवं विशेष्यतावच्छेदकसामानाधिकरण्यमात्रेणोभयकोटिम[8]वगाहमानाया बुद्धेरपि संशयत्वे सामानाधिकरण्येनैककोट्यनुमितिं प्रति तथाविधापरकोट्यनुमितिसामग्र्याः पृथगेव प्रतिबन्धकत्वं कल्प्यते। तथा सति वह्न्यनुमितौ इच्छाविशिष्टायाः पर्वतत्वसामानाधिकरण्येन तदभावव्याप्यवत्तावगाहिवह्न्यभावव्याप्यवत्पर्वतत्वावच्छिन्नविशेष्यकवह्न्यभावादिविधेयकशाब्दादिसामग्र्याः प्रतिबन्धकत्वाकल्पनेन लाघवात्। तादृशसामग्रीकाले तु[9] क्लृप्तप्रतिबन्धकताकबाधाभावादिविशिष्टवह्न्यभावव्याप्यवत्तानिर्णयात्मकतदभावानुमितिसामग्रीसत्त्वेनैव तदनुमितिवारणसंभवात्। अतो विशेष्यतावच्छेदकसामानाधिकरण्यमात्रेणोभयव्याप्यवत्तापरामर्शात् सामानाधिकरण्यमात्रेणोभयकोटिमवगाहमानाया अनुमितेर्नापत्तिः।

अथ सामानाधिकरण्येन वह्न्यभावस्य सिद्धिदशायां तदनुमितेरनु[10]दयात् न तादृशसिद्ध्यभावोऽवश्यं तादृशानुमितिसामग्रीप्रतिबन्धकतावच्छेदककोटौ निवेश-

१ अपि तु गु०। मा० पा०। २ प्रति ब०। मा० पा०। ३ नकि०। मा० पा०। ४ शब्दा०। मा० पा०। ५ शब्दत्वा०। मा० पा०। ६ रयोस्ता०। मा० पा०। ७ शब्दो०। मा० पा०। ८ मव्याहेमानाया०। मा० पा०। ९ तु प्रति०। मा० पा०। १० दात्। मा० पा०।

नीयः, एवंच तथाविधसिद्धिदशायाम् उपदर्शितशाब्द[1]सामग्रीसत्त्वेऽनुमितिवारणाय तादृशसामग्र्याः प्रतिबन्धकत्वमावश्यकमिति किमनुमितौ विरोधिकोट्यनुमितिसामग्रीप्रतिबन्धकत्वेन[2]। न चैवमपि तादृशसामग्र्याः प्रतिबन्धकत्वकल्पनेऽप्रामाण्यविशिष्टपर्वतविशेष्यकवह्न्यभावप्रकारकज्ञानविषयत्वादिविशिष्टवह्न्यभाव - व्याप्यवत्पर्वततत्वाद्यवच्छिन्नविशेष्यताकवह्न्यभावविधेयकशाब्दबोधसामग्र्याः प्रतिबन्धकत्वाकल्पनप्रयुक्तलाघवमस्त्येव, तादृशशाब्दबोधजनकविशेष्यतावच्छेदकप्रकारकज्ञानदशायां वह्न्यभावसिद्धाव[3]प्रामाण्यनि[4]वेशस्यानावश्यकत्वादिति।

यत्तु तादृशानुमितिसामग्र्याः प्रतिबन्धकत्वकल्पनप्रयुक्तं लाघवं प्र[5]त्येतुमशक्यम्, अनुमितित्वप्रकारकत्वमनिवेश्य तादृशेच्छासाधारणानुमितिविषयकेच्छात्वेनैव सिद्धावनुमित्साया उत्तेजकत्वात् तादृशेच्छाविशिष्टशाब्दसामग्रीकाले तथाविधानुमित्साविरहविशिष्टसिद्ध्यभावस्यावश्यकतया तद्घटितवह्न्यभावानुमितिसामग्र्या आवश्यकत्वात्। न च पर्वतेऽप्रामाण्यग्रहाभावविशिष्टतादृशसिद्ध्यभावघटितयथोक्तानुमितिसामग्र्या आवश्यकत्वादिति वाच्यं, तादृशसिद्धावप्रामाण्यग्रहसत्त्वेऽप्रामाण्यग्रहाभावविशिष्टयोग्यताज्ञा[6]नरूपकारणविरहेण शाब्दसामग्र्या एव तत्राभावात् तादृशविशिष्टधर्मावच्छिन्नविशेष्यताकबुद्धेरलीकत्वात्। वह्न्यभावज्ञानंजायतामित्येतादृशेच्छाविशिष्टशुद्धपर्वतत्वावच्छिन्नविशेष्यताकवह्न्यभाव - शाब्दसामग्रीकालेऽपि पर्वतो वह्निमानित्येतादृशानुमित्यनु[7]दयात् तादृशसामग्रीप्रतिबन्धकताया आवश्यकत्वात्। तादृशसामग्र्या उपदर्शितशाब्दसामग्रीव्यापकतया तत्प्रतिबन्धकत्वकल्पनेनैवोपपत्तेः उपदर्शितशाब्दसामग्रीप्रतिबन्धकत्वकल्पनं ना[8]वश्यकमिति वाच्यं, वह्न्यभावव्याप्यवत्पर्वतत्वावच्छिन्नविशेष्यकवह्न्यभावप्रतीतीच्छ[9]योच्चरितत्वरूपतात्पर्यज्ञानसत्त्वे वह्न्यभावव्याप्यवत्तादिबोधकसामग्र्यसत्त्वे पर्वतो वह्न्यभाववान् इत्येतादृशशाब्दबोधानुदयात् तादृशतात्पर्यज्ञानविलक्षणतात्पर्यज्ञानस्यैव शुद्धपर्वतत्वावच्छिन्नविशेष्यकशाब्दबोधहेतुत्वात् तथाविधशाब्दबोधसामग्र्या उपदर्शितशाब्दबोधसामग्र्यव्यापकत्वादित्येतदप्यनुपादेयमेव। तथा हि यदि पर्वते वह्न्यभावशा[9]ब्दोजायतामित्येतादृशेच्छाविशिष्टसामग्रीप्रतिबन्धकत्वाद्व्य[10]व्यतिरिक्तं तादृशेच्छाविशिष्टशाब्दसामग्रीप्रतिब-

---

१ शब्द०। मा० पा०। २ त्वे। मा० पा०। ३ १ र०। मा० पा०। ४ ञ्चानस्यावश्यकत्वात्। मा० पा०। ५ प्रत्यात्तु०। मा० पा० ६ जतान०। मा० पा०। ७ दनुयात्। मा० पा०। ८ नामुकेऽपीति। मा० पा०। ९ च्छा- योच्च०। मा० पा०। १० शब्द। मा० पा०। ११ दितिरि०। मा० पा०।

न्धकत्वं मया कल्प्यते तदैव भवतामुक्तलाघवावकाशः। तदेव न। किन्तु तत्रैव शाब्दत्वप्रकारकत्वमनिवेश्य पर्वते वह्न्यभावज्ञानं जायतामित्येतादृशेच्छासाधारणशाब्दविषयकेच्छात्वेन शाब्देच्छावैशिष्ट्यं निवेश्य एकमेव प्रतिबन्धकं कल्प्यते, तत्कल्पनं च भवतामपि। अन्यथा शाब्दत्वप्रकारकेच्छाविशिष्टशाब्दसामग्रीकाले वह्न्यभाववान् पर्वत इत्येतादृशसिद्धिसत्त्वे वह्न्यनुमित्युदयापत्तेः।

अथ पर्वते वह्न्यभावशाब्दो जायतामित्याकारकेच्छायास्तथाविधशाब्दविषयकेच्छात्वेन निवेशे प्रत्यक्षान्यज्ञानं जायतामित्याकारकविषयमिश्रितेच्छासत्त्वे वह्न्यभावशाब्दसामग्रीसत्त्वे वह्न्यनुमित्यनुत्पादप्रसङ्गः, तस्मात् तादृशेच्छानां तथाविधवह्न्यभावप्रकारकत्वप्रकारताभिन्नकिञ्चिद्विषयकत्वप्रकारत्वानिरूपितानुमित्यवृत्तिधर्मावच्छिन्नशाब्दवृत्तिविषयताकत्वेनैव निवेशः कार्यः। एवं च पर्वते वह्न्यभावविषयकं ज्ञानं जायतामित्येतादृशेच्छायास्तादृशरू[१]पेणासंग्रहात् तादृशेच्छाविशिष्टशाब्दसामग्र्याः पृथक् प्रतिबन्धकत्वमावश्यकमेवेति चेत्। मास्तु। शाब्दत्वाद्धिप्रकारकेच्छासंग्राहकरूपेण तादृशेच्छायाः संग्रहः। तथापि पर्वतविषयत्वानवगाहिनीं वह्न्यभावज्ञानं जायतामित्याकारकेच्छां निवेश्य क्लृप्तया शाब्दसामग्रीप्रतिबन्धकतयैवोपपत्तौ तथाविधेच्छाविशिष्टसामग्र्याः प्रतिबन्धकत्वकल्पनं निरर्थकम्। वह्न्यभावज्ञानं जायतामित्येतादृशेच्छाविशिष्टशाब्दसामग्र्याः प्रतिबन्धकत्वं भवताऽपि कल्पनीयम्, अन्यथा तादृशेच्छाकाले पर्वतत्वसामानाधिकरण्येन वह्न्यभावस्य सिद्धिसत्त्वे सत्यां च धर्म्यन्तरे वह्न्यभावानुमितिसामग्र्यां पर्वते वह्न्यभावानुमित्यनुदयेन तत्र वह्न्यनुमित्युत्पादस्यावश्यकतया तत्र व्यभिचारवारणाय विरोधिकोट्यनुमितिसामग्रीप्रतिबन्धकतावच्छेदककोटिप्रविष्टसिद्ध्यभावस्य प्रतियोगितावच्छेदककोटौ पक्षविशेषमिश्रितेच्छाऽभावस्यैव निवेशनीयतया वह्न्यभावज्ञानं जायतामित्येतादृशेच्छाविशिष्टशाब्दसामग्रीकाले तथाविधानुमितिसामग्र्या विरहेण वह्न्याद्यानुमित्यापत्तेः। तादृशशाब्दसामग्रीकालीनानां तथाविधानन्तेच्छानामपि त[२]त्तद्व्यक्तित्वेनाभावानां तादृशसिद्ध्यभावप्रतियोगितावच्छेदककोटिनिवेशे महागौरवात्तदपेक्षया तादृशसामग्रीप्रतिबन्धकत्वकल्पनाया एवोचितत्वात्। न च महानसविशेष्यकवह्निज्ञानं जायतामित्येतादृशेच्छावारणाय कि[३]ञ्चिद्विषयकत्वावच्छिन्नत्वानवच्छिन्नवह्न्यभावविषयकत्वप्रकारताशालित्वेन वह्न्यभावप्रकारकं ज्ञानं जायतामित्येतादृशेच्छाः तथाविधसामग्रीप्रतिबन्धकतायां निवेश्याः।

१ कल्पना० मा० पा० २ तद्व्य० । मा० पा० । ३ किन्नोद्वि० । मा० पा० ।

एवं च पर्वते वह्न्यभावप्रकारकज्ञानं जायतामित्येतादृशेच्छानामतथात्वात् तादृशेच्छाविशिष्टसामग्र्या उभयमतसिद्धप्रतिबन्धकताकत्वेऽपि न तया निर्वाह इति पर्वते वह्न्यभावप्रकारकज्ञानं जायतामित्येतादृशेच्छाविशिष्टसामग्र्याः स्वतन्त्रप्रतिबन्धकत्वं भवतामावश्यकमिति वाच्यम्, पर्वतान्यविषयकत्वावच्छिन्नत्वानवच्छिन्नवह्न्यभावप्रकारकत्वप्रकारताकत्वेनैव वह्न्यप्रकारकज्ञानं जायतामित्येतादृशेच्छानां निवेशात् तादृशरूपस्य च पर्वते वह्न्यभावप्रकारकज्ञानं जायतामित्येतादृशेच्छायामपि सत्त्वादिति। मैवम्। तादृशानुमितिसामग्र्याः प्रतिबन्धकत्वाकल्पने भ्र[1]मत्वविशिशिष्टशुद्धविशेषणतासंसर्गकवह्न्यभावप्रकारकज्ञानविषयत्वादिविशिष्टवह्न्यभावव्याप्यवत्पर्वतत्वावच्छिन्नविशेष्यकवह्न्यभावशाब्दसामग्रीप्रतिबन्धकल्पनप्रयुक्तगौरवस्यापाकर्तुमशक्यत्वात् तादृशशाब्दबोधजनकज्ञाने शुद्धविशेषणतासंसर्गकवह्न्यभावप्रकारज्ञानत्वावच्छेदेनैव भ्रमत्वावगाहना[2]द् अवच्छेदकावच्छेदेन वह्न्यभावप्रकारकयोग्यतासन्देहसत्त्वे तथाविधशाब्दबोधस्य प्रामाणिकतया तत्सामग्रीप्रतिबन्धकताया भवतामप्यावश्यकत्वात्। न चावच्छेदकावच्छेदेन सिद्धिसत्त्वे तादृशविशिष्टधर्मावच्छिन्नविशेष्यकशाब्दसामग्रीसत्त्वेऽप्यप्रामाण्यज्ञानानास्कन्दितसिद्धिसत्त्वेनानुमितिसामग्र्यभावादपरकोट्यनुमित्यापत्तिरिति तादृशशा[3]ब्दसामग्र्याः प्रतिबन्धकत्वमावश्यकमितिवाच्यम्, अवच्छेदकावच्छेदे[4]न विरोधिकोटिसिद्धौ सत्यां बाधेन प्रतिबन्धादेवापरकोट्यनुमितिवारणसंभवात्।

अथोपदर्शितशाब्दसामग्र्याः पर्वतोवह्निमानित्यनुमितौ द्रव्यं वह्निमदित्यनुमितिप्रतिबन्धकत्वातिरिक्तप्रतिबन्धकत्वं यदि कल्प्यतेऽस्माभिस्तदैव भवतामुक्तलाघवं संभवति, तदेव न, किन्तु द्रव्यं वह्निमदित्यनुमितिस्थलीयप्रतिवध्यतावच्छेदककोटौ विशेष्यतावच्छेदकानिवेशात् तादृशप्रतिबन्धकतयैव निर्वाहः। न च विशेष्यतावच्छेदकविशेषमिश्रितानुमित्सानामुत्तेजकत्वानुरोधाद् विशेष्यतावच्छेदकनिवेशनमावश्यकमिति वाच्यम्, पूर्वोपदर्शितविशेष्यतावच्छेदकनिष्ठप्रत्यासत्त्यवच्छिन्नप्रतियोगिताकानुमित्साऽभावस्य सामग्रीविशिष्टस्य विशेष्यतावच्छेदकतासम्बन्धेनानुमितिं प्रति प्रतिबन्धकतायाः स्वीकाराद् विशेष्यतावच्छेदकानिवेशेऽप्यनुपपत्त्य[5]भावात्। एवंचावच्छेदकावच्छेदेनैकतरकोट्यवगाहिज्ञानमेव संशय इति मतेऽपि प्रागुक्तलाघवज्ञानसहकृतपरामर्शादनुमित्यापत्तिर्दुर्वारैव। लाघव-

---

१ भ्रम०। मा० पा०। २ नावच्छे० मा० पा०। ३ शब्द०। मा० पा० ४ दे। मा० पा०। ५ द्यभा०। मा० पा०।

ज्ञानसहकृतपरामर्शनियतोपदर्शितशाब्दादिसामग्र्या अपि उक्तरीत्याऽन्यधर्मावच्छिन्न-विशेष्यताकानुमितिस्थलीयप्रतिबन्धकतयैव निर्वाहेण प्रागुक्तलाघवानवकाशादिति-चेत् । तर्हि मन्मतेऽपि विरोधिकोट्यनुमितिसामग्र्या अनुमितौ नाधिकं प्रतिबन्ध-कत्वं, किन्तु भिन्नविषयकप्रत्यक्षादौ तत्प्रतिबन्धकत्वमिच्छाया उत्तेजकत्वकल्प[१]न-मनादृत्यानुमितिसाधारणतादृशसामग्र्यनुत्तरत्वस्य प्रतिवध्यतावच्छेदकत्वोपगमात् तादृशप्रतिबन्धकतयैव निर्वाह इति नोक्तस्थलेऽनुमित्यभ्युपगमः ।

अथ प्रत्यक्षस्थलीयप्रतिवन्धकतायामपरकोट्यनुमितिसामग्र्यभावनिवेश-स्यावश्यकतया क्लृप्तप्रतिबन्धकतया (एव[२]) निर्वाहः । यच्चोक्तमुपदर्शितस्थले एककोटयनुमितिः स्वीक्रियते न प्रत्यक्षादिकमिति अपरकोट्यनुमितिसामग्र्यभाव-स्य विरहेऽपि तत्स्थलीयानुमितौ अधिकविषयत्वोकल्पनाऽपेक्षायां विषयताकल्पने-लाघवात् विनिगमक[३]कोटेरेवानुमितेरभ्युपगमात् ।

अथ प्रतिबन्धकताधिकविरहेऽपि परामर्शघटितानुमित्युत्पादस्य प्रयोजक-सामग्रीव्याप्तौ विरोधिकोट्यनुमितिसामग्र्यभावस्यैव निवेशयितुमुचितत्वान्नोक्त-स्थले संशयानुमित्यापत्तिरिति तु नाशङ्कनीयम्, अपरकोट्वनुमितिसामग्र्यभावस्य व्याप्तावुपदर्शितना[४]नाविधगुरु[५]तरशब्दसामग्र्यभावनिवेशप्रसङ्गात्, तदपेक्षया लाघवेनापरकोट्यनुमितिसामग्र्यभावस्यैव निवेशयितुमुचित[६]त्वमिति न किञ्चिदनुमितेः संशय[७]त्वापत्तिरिति कृतमतिविस्तरेण ।

इति रत्नकोषकृता कृतविचारः सम्पूर्णः ।
यत्नेनाऽऽलिखितं शास्त्रं हरते यस्तु कामतः ।
सूक[७]री तस्य माता च पिता तस्य च ग[८]र्दभः ।

इति ।

---

१ कल्पमना० । मा० पा० । २ नास्ति मा० पा० । ३ कवासनतत्तादृशकोटिरे० । मा० पा० । ४ नामावि० । मा० पा० । ५ एव शब्द सा० । मा० पा० । ६ तमिति किञ्चिदनुमितेः । युयापति० । मा० पा० । ७ स्वकारैः । ८ गर्द्धवः मा० पा० ।

# रत्नकोषमतवादार्थस्य

# शुद्धिपत्रम्

| पृ० | प० | अशुद्धि | | शुद्धि |
|---|---|---|---|---|
| २ | २ | प्रत्यविरोधिधर्मान्तराप्रकारकत्वे | — | प्रति विरोधिधर्मान्तरप्रकारकत्वे |
| ४ | १७ | अनुगतकल्पनसम्भेवदुत्तेजिकाना | — | संभवदनुगतकल्पनोत्तेजकताकाना |
| १० | २५ | भिन्नप्रकारता | — | भिन्नविशेष्यतानिरूपितप्रकारता |
| ११ | २७ | भिन्नप्रकारताया | — | भिन्नविशेष्यतानिरूपितप्रकारताया |
| १४ | १७ | देव | — | देवन |
| १७ | २ | शब्दोऽयमिति | — | शाब्दोपमिति |
| १९ | २५ | तेनानवच्छिन्ना | — | तन्न निरवच्छिन्नम् |
| २९ | १२ | अनुस्वातन्त्र्येणैव | — | स्वातन्त्र्येणैव |
| २९ | २२ | प्रतिबन्धकताकल्प | — | प्रतिबन्धकत्वाकल्प- |
| ४३ | १९ | त्युदयात् | — | त्युनुदयात् |
| ४७ | ३ | नचैवमपि | — | यत्तु |
| ४७ | ७ | प्रामाण्यनिवेशस्याना | — | प्रामाण्यग्रहस्या |
| ४७ | ८ | यत्तु | — | न च |
| ४७ | १३ | आवश्यकत्वादिति | — | आवश्यकत्वमिति |

# MITHILA INSTITUTE PUBLICATION SERIES

## A. Ancient works

| | | | Rs. | nP. |
|---|---|---|---|---|
| 1. | Tattvacintāmaṇi of Gaṅgeśa with Āloka and Darpaṇa Vol. I | 1957 | 12 | 00 |
| 2. | Kāvyaparīkṣā of Śrīvatsalāñchana | 1956 | 8 | 00 |
| 3. | Pārijātaharaṇa of Karṇapūra | 1956 | 8 | 00 |
| 4. | Kāvyalakṣaṇa ratnaśrī-Com. on Kāvyādarśa of Daṇḍin by Ratnaśrījñāna of Ceylon | 1957 | 15 | 00 |
| 5. | Vaiśeṣikadarśana with an anon. com. | 1957 | 6 | 50 |
| 6. | Abhijñānaśakuntalam of Kālidāsa with com. by Śaṅkara and Narahari | 1957 | 15 | 00 |
| 7. | Āgamadambara, a drama by Jayantabhaṭṭa | ... | ... | |
| 8. | Līlāvatī of Bhāskaracārya with com. by Dāmodara Miśra | 1959 | 14 | 00 |
| 9. | Mantrakaumudī of Devanātha Ṭhakkura | 1960 | 6 | 00 |
| 10. | Padārthīyadivyacakṣu of Umāpati | 1901 | 2 | 50 |
| 11. | Rasataraṅgiṇī of Rāmānanda Ṭhakkura | 1961 | 2 | 25 |
| 12. | Alaṅkāramañjarī of Veṇīdatta | 1961 | 2 | 00 |
| 13. | Lakṣaṇamāla of Udayana with Com. by Śaśinātha | 1963 | 3 | 00 |
| 14. | Lakṣaṇāvalī of Udayana with Com. by Keśavabhaṭṭa | 1963 | 2 | 75 |
| 15. | Saugatasūtravyākhyānkārikā | 1965 | 2 | 00 |
| 16. | Śabdaratnākara | 1965 | 27 | 00 |
| 17. | Ratnakoshamadabadarth | 1966 | 2 | 25 |
| 18. | Keoradulam & Peekdutam | 1966 | 1 | 75 |

## B. Modern works

| | | | | |
|---|---|---|---|---|
| 1. | Rāmāvatāraprakīrṇa prabandhāvalī (Miscellaneous) Vol. I | 1956 | 11 | 00 |
| 2. | Tritalāvacchedaktāvāda of Śaśinātha (Navya Nyāya) | 1956 | 4 | 50 |
| 3. | Liṅgavacanavicāra of Dīnbandhu (Vyākaraṇa) | | 4 | 00 |
| 4. | Vimaṇḍalavakra Vicāra of Dayanātha (Jyotiṣa) | 1954 | 2 | 00 |

## C. Studies in English

| | | | | |
|---|---|---|---|---|
| 1. | History of Mithilā—Dr. Upendra Thākur | 1956 | 17 | 50 |
| 2. | History of Navya Nyāya in Mithila Prof. Dinesh Chandra Bhattacharya | 1958 | 13 | 50 |
| 3. | Vācaspati Misra Advaita Vedānta-Dr. S.S. Hāsurkar | 1958 | 15 | 00 |

## D. Mahāyāna Sanskrit Text

| | | | | | |
|---|---|---|---|---|---|
| 1. | Avadānaśataka | 1958 | Unbound | 10 | 00 |
| | | | Bound | 12 | 50 |
| 2. | Lalitavistara | 1958 | Unbound | 10 | 00 |
| | | | Bound | 12 | 50 |
| 3. | Divyāvadāna | 1959 | Unbound | 16 | 00 |
| | | | Bound | 20 | 00 |
| 4. | Madhyamakaśāstra | 1960 | Unbound | 10 | 00 |
| | | | Bound | 12 | 50 |
| 5. | Mahāyanasūtrasangraha | 1961 | Unbound | 16 | 00 |
| | | | Bound | 20 | 00 |
| 6. | Avadānakalpalatā Vol. I | 1959 | Unbound | 10 | 00 |
| | | | Bound | 12 | 50 |
| 7. | Avadānakalpalatā Vol. II | 1959 | Unbound | 10 | 00 |
| | | | Bound | 12 | 50 |
| 8. | Saddharmapuṇḍarīka sūtra | 1960 | Unbound | 10 | 00 |
| | | | Bound | 12 | 50 |
| 9. | Bodhicaryāvatāra | 1960 | Unbound | 10 | 00 |
| | | | Bound | 12 | 50 |
| 10. | Gaṇḍavyūhasūtra | 1960 | Unbound | 16 | 00 |
| | | | Bound | 20 | 00 |
| 11. | Jātakamālā | 1959 | Unbound | 10 | 00 |
| | | | Bound | 12 | 50 |
| 12. | Samādhirājasūtra | 1961 | Unbound | 12 | 00 |
| | | | Bound | 16 | 00 |
| 13. | Śīkṣāsamuccaya | 1960 | Unbound | 10 | 00 |
| | | | Bound | 12 | 50 |
| 14. | Laṅkāvatārasūtra | 1960 | Unbound | 10 | 00 |
| | | | Bound | 12 | 50 |
| 15. | Aṣṭasāhasrikā | 1960 | Unbound | 20 | 00 |
| | | | Bound | 25 | 00 |
| 16. | Suvarṇaprabhāsa sūtra | | | | |
| 17. | Tāthāgataguhyaka (Guhyasamājatantra) | 1965 | Unbound | 10 | 00 |
| | | | Bound | 12 | 50 |
| 18. | Mahāyān Sūtrālaṅkāra | | | | |

## E. Works in Press

1. Vivaraṇapancikā
2. Daśabhūmika sūtra
3. Mahāyānasūtra saṁgrah II 1964 Unbound 20 00
   Bound 25 00
4. Sulocanāmādhava campū
5. Nyāyacaturgranthikā
6. Tattvacintāmaṇī with Āloka and Darpaṇa Vol. II
7. Nyāyakusumāñjali with Āmoda Viveka and Bodhinī

## F. Works under Preparation

1. Mahāvastu
2. Works of Aśvaghosa—Buddhacarita & Saundarananda
3. Mahāyānastotrasaṁgraha
4. Vinaya of Mūlasarvāstivādins.